ॐ नमः परमात्मने

# ख्यातिवादः

---

## मङ्गलम्

आकृतिं या निराकृत्य सच्चिदानन्दशब्दभाक् ।
सद्वचोभ्योऽधिगन्तव्या तां परां समुपास्महे ॥१॥

सादरं तं नमस्कुर्वे विश्वरूपं तु भारतीम् ।
पादाम्बुजेषु यस्यासन्शिष्यालयः समन्ततः ॥२॥

ख्यातावथापि यदपीह मयाऽत्र किञ्चित्
सन्धार्यते सुनिपुणं परिगृह्य सारम् ।
ज्ञानं रिरक्षिषति चेदनुमोदनीयः
कृत्यैतया सुकृतिभिः प्रकृतिं स्मरद्भिः ॥३॥

हेत्वात्मनास्तु नवनीतमथापि नीतं
कार्यात्मना जनयितुं न हि यत्यते न ।
मृत्स्नामुपेत्य कलशो जनिमेतु लोके
तां नैव वाञ्छति जनो जलहर्तुकामः ॥४॥

मायामालम्ब्य नृत्यच्छ्रुतिशिखरशतैर्ज्ञाप्यमानं परं य-
द्योगारूढैर्मुनीन्द्रैः परिहृतविपयैः काम्यमानं विमुक्त्यै ।
चित्तं चैत्तं च बुध्यद्विगतमलिनिमा भासमानं बृहच्च
गोभिर्गोपैश्च नित्यं वलयितमपि न द्वैतमालम्बते यत् ॥५॥

स्वामी शङ्करचैतन्यभारती

प्रत्यहं तं नमस्कुर्वन् शङ्करचेतनो मुनिः ।
भारतीपदमालम्ब्य भारतीदययाचितः ॥६॥

शास्त्रविस्तृतकान्तारे परिक्राम्यति यः सदा ।
मोदमानो विनोदाय लेखनीमुदतिष्ठिपत् ॥७॥

## ख्यातेस्सर्व्वलोकसिद्धत्वम्

इह तावद्भ्रान्तिर्न कस्य जायते । 'स्थाणौ मम चौरप्रतीतिः समजनि' -इत्याऽऽभीरदारेभ्योऽनुवादात्[1] ।

## ख्यातौ विप्रतिपत्तिसत्त्वम्

तथापि , परीक्षकैस्तत्र[2] विप्रतिपद्यमानैर्लोकव्यवहारमनुरुन्धानैः [3]सा विविधमुपपाद्यते ।

## विप्रतिपत्तेस्संशयद्वारा विचाराङ्गत्वम्

[4]अत एव च , [5]तेषां विप्रतिपत्तिः संशीतिजननीभूयमनुभूय विचाराङ्गभावमश्नुते । विचारविनिवर्त्त्या[6] हि संशीतिर्विप्रतिपत्तिं विना न निर्वहति – इति , [7]आविचारारम्भमननुवर्त्तमानाऽपि विप्रतिपत्तिस्तदुत्पादनेनैव[8] न्यायाङ्गम् - इति स्थितिः ।

---

1 भ्रान्तेरनुवादात्

2 भ्रान्तौ

3 भ्रान्तिः

4 ख्यातविप्रतिपत्त्यनुरोधेन भ्रान्तेर्विविधमुपपादनात् परीक्षकाणां विप्रतिपत्तिः इतरेषां परीक्षकाणां वाक्यानां संशयजनकत्वं प्राप्य विचाराङ्गतां प्राप्नोति ।

5 परीक्षकाणाम्

6 विनिवर्त्त्यत्वेन विचाराङ्गं संशयः । स च विप्रतिपत्तिं विनानुपपन्नः - इति , विप्रतिपत्तेरपि विचाराङ्गत्वम् ।

7 कार्यभूतस्य विचारस्यारम्भे यावत्स्य जन्मारम्भानन्तर्वर्तमाना यस्माद्विप्रतिपत्तिस्तस्मात्सा न विचाराङ्गम् । अव्यवहितपूर्व वियमानत्वेनैवाङ्गत्वात् । इत्थं विचारस्य न साक्षादङ्गं विप्रतिपत्तिः - इत्यन्वयः ।

8 तदुत्पादनेनैव विचाराङ्गभूतसंशयजनकत्वेनैव न्यायाङ्गं विचाराङ्गम् । परम्परया विचाराङ्गसंशयजनकत्वेन विप्रतिपत्तेर्विचाराङ्गत्वम् - इत्यर्थः ।

## निर्वचनस्य सिद्धानुरोधित्वम्

[9]तत्र च –

[10]सिद्धानुगममात्रं हि कर्त्तुं युक्तं परीक्षकैः ।
न सर्वलोकसिद्धस्य लक्षणेन निवर्त्तनम् ॥

- इति नीतिमनुसरतेत्थमेवानुरूपं सर्वमपि निर्वक्तुमर्हं येन सिद्धमेवानुरुध्येत ।

## सिद्धविरुद्धनिर्वचनस्य दुष्टत्वम्

[11]नो चेत्, सार्वजनीनमनुभवमन्यथाकुर्वता [12]लक्षणादिनिर्माणेन स्वानभिज्ञतामवद्योतयता वादिना पराजितेन किमिति न भाव्यम् ।

[13]एवं निर्वक्तुमनीशानो हि स्वबुद्धिमध्यासीनेन येन केनापि लक्षणाभासेनानुभूतिमेवान्यथयति - इति विद्वज्जनैरुपेक्षणीयतामेवापद्यते ।

## अनिर्वचनीयख्यातेरेव सिद्धानुरोधिता

तत्र चानिर्वचनीयख्यातिवर्जं तत्तत्ख्यातिं निरुच्य व्यवहृतिसिद्धमपह्नुवते वादिन - इति व्यक्तीकरिष्यते ।

## निर्णयासम्भवस्याभावः

[14]एतादृशविषयेषु विप्रतिपत्तिषु बह्वीषु जागरूकास्वपि

सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः

– इति भणितिमालम्बमानैः [15] किन्नाम यन्न निर्णेतुं पार्यते – इति, प्रतिपत्रा मोदमानेनैव भाव्यं, न तु दूयमानमानसेन ।

---

[9] विचारे

[10] परीक्षकैर्लक्षणादिनिर्माणेन प्रतीतिसिद्धस्यैवानुगम एव कर्त्तव्यः । परीक्षकैः सर्वलोकसिद्धस्य लक्षणनिर्माणेन - सिद्धविरुद्धलक्षणनिर्माणेन निरासो न कार्यः ।

[11] सिद्धविरुद्धनिर्वचनं - सिद्धाननुकूललक्षणनिर्माणं सति

[12] लक्षणादिनिर्माणेन सार्वजनीनमेवानुभवं स्वलक्षणाननुकूलत्वेनाननुपपन्नत्वेन घोषयता जनेन । अनुभवस्यान्यथाकरणं तदस्वीकारः । यथा भ्रमो मे जात इत्यनुभवस्यान्यथाकरणं भ्रमो न जातो किन्तु ज्ञानद्वयमेव - इति प्राभाकरेण ।

[13] सिद्धानुकूलत्वेन निर्वक्तुमनीशानो वादी ।

[14] भ्रान्त्यादिषु

[15] अस्माभिः

## वेदान्तविरुद्धमतानां क्षीणबलत्वम्

अपि च , शाङ्करेषु जीवत्सु तार्किकादयः प्रतिभटा जीवितुमेव नोत्सहन्ते ।
सर्वेषामपि वाह्यावाह्यदर्शनानां वेदान्तोसङ्गमनासाद्य न निर्वाहः । समुल्लसन्तु [16]तानि वेदान्तैकवाक्यतामापद्य नाम , न निवारयामः । नो चेत् , खण्डनदुर्गतिपूरैः [17]प्लावनीयानि – इति - न मनोदवथोरवकाशोऽपि - इति ।

## प्रकारमात्रस्य विप्रतिपत्तिविषयत्वम्

[18]तत्र विप्रतिपत्तयः -

जाग्रति हि प्रकारेषु विवादा , न तु धर्मिणि ; ।
प्रकारे सन्दिहानोऽपि संशेते , न हि धर्मिणि ; ॥

धर्मिकोटितांको[19] न सन्देह - इत्यर्थः ।

## प्रथमविप्रतिपत्तिस्साकारख्यातिगोचरा

प्रथमा[20] [21]साकारख्यातौ –

[22]शुक्तिगतत्वेन भासमानो रजतत्वादिः ज्ञानवृत्तिः , न वा[23] ।

## साकारख्यातौ विप्रतिपन्नाः

'विज्ञानमेव तत्तदाकारेण प्रथते[24]' – इति ब्रुवाणस्य योगाचारस्य[25] विधिकोटिः[26] ।

---

16 वेदानुकूलानि तद्बाह्यानि च दर्शनानि

17 वाह्यावाह्यदर्शनानि

18 भ्रान्तौ

19 धर्मिप्रकारतो - अशुद्धपाठः

20 विप्रतिपत्तिराद्या

21 साकारख्यातिः ?

22 अधिष्ठानगतत्वेन भासमानो धर्मो ज्ञानस्य न वा इति साकारख्यातौ विप्रतिपत्तिः । ज्ञानगत एव रजतत्वादिर्धर्मः शुक्तिगतत्वेन भ्रमे भासते इति साकारख्यातिः । न भासते इति सर्वे इतरे ।

23 भ्रमे भासमानः प्रकारो ज्ञानस्य धर्मो न वा । ज्ञानाकारो न वा - इत्यर्थः ।

[27]निषेधकोटिः अन्येषाम्[28] ।

## साध्यतदभावप्रसिद्धिः

[29]ज्ञानवृत्तित्वं ज्ञानत्वादौ प्रसिद्धम्[30] । [31]तदभावश्च बाह्यत्वे[32] ।

## बाह्यत्वस्य ज्ञानावृत्तित्वम्

यद्यपि – बाह्यत्वे [33]भ्राम्यतो बाह्यत्वमपि ज्ञानाकारः[34] , तथापि – [35]वस्तुस्थितिमनुरुध्य उभयत्र[36] मते बाह्यत्वं न [37]ज्ञानधर्मः , किन्तु , [38]आन्तरत्वमेव – इति बोध्यम् । [39]'बाह्यत्वं भासमानमप्यलीकं , न ज्ञानाकार[40]' – इति हि बौद्धा मन्वते ।

---

24 विज्ञानमेव । ज्ञानस्यैव तत्तद्रूपेण भानम् । न बाह्यं किञ्चिदस्ति । प्रमाणाभावाज्ज्ञानभिन्ने बाह्ये ।

25 विज्ञानवादिनः

26 शुक्तौ भासमानं रजतत्वं ज्ञानधर्म एव – इति ।

27 शुक्तौ भासमानं रजतत्वं न ज्ञानस्य धर्मः – इति ।

28 विज्ञानवादिभिन्नानाम्

29 ज्ञानधर्मत्वम्

30 ज्ञानत्वं हि ज्ञानवृत्ति ।

31 ज्ञानवृत्तित्वाभावः

32 बाह्यत्वं हि ज्ञानावृत्ति । बाह्यत्वञ्च ज्ञानभिन्नत्वम् । न हि ज्ञानभिन्नत्वं ज्ञानवृत्ति भवति । ज्ञाने स्वतादात्म्यात् , ज्ञानभिन्नत्वस्य च तद्विरोधित्वात् । न हि विरोधिनोर्द्वयोरेकधर्मिकत्वम् ।

33 आन्तरेऽपि वस्तुनि यस्य जनस्य बाह्यत्वविषयको भ्रमो जातः – अयं बाह्य – इति , तस्य ।

34 ज्ञानवृत्ति

35 भ्रमभिन्नस्थलविषयत्वेन

36 विज्ञानवादितद्भिन्नमतयोः

37 ज्ञानवृत्ति

38 ज्ञानधर्मः इत्यनुषङ्गः

39 बाह्यत्वस्येतरेषां मते ज्ञानधर्मत्वाभावेऽपि विज्ञानवादिनां तत्कथं सम्मतं स्यात् । तत्राह – बाह्यत्वमिति । विज्ञानवादिनो भासमानमपि बाह्यत्वमलीकं , न ज्ञानाकार – इति स्वीकारात् , न बाह्यत्वस्य ज्ञानधर्मत्वम् ।

40 भ्रमेण गृह्यमाणं बाह्यत्वमलीकमेव । न तस्य ज्ञानवृत्तित्वम् । ज्ञानधर्मस्यालीकत्वाभावात् ।(?)

## विप्रतिपत्तिकोटिद्वयदोषोद्भावनेन विप्रतिपत्त्यनुपपत्तिः

## तत्र विधिकोटौ दोषाः

[41]ननु

[42]विधिकोटौ सिद्धसाधनम् । **विषयतासम्बन्धस्य वृत्तिनियामकत्वपक्षे** तेन[43] सम्बन्धेन रजतत्वस्य ज्ञाने वृत्तिताया **नैयायिकैरभ्युपगमनीयत्वात्** ।

एवं , [44]कालिकादिनाऽपि तद् बोध्यम् ।

[45]समवायसम्बन्धावच्छिन्नवृत्तितासाध्यता तु न शङ्कास्पदमेव । **बौद्धानां**[46] समवायस्य शशशृङ्गायमानत्वात् । तथा च , बाधः ।

[47]एवं , घटज्ञाने रजतत्वस्य(०या - शुद्धपाठः/य०)वृत्तेर्बाधः[48] ।

[49]अपुरोवृत्तिशुक्तिगतत्वेनाभासमानत्वाच्च , पक्षाप्रसिद्धिः ।

---

[41] उक्तविप्रतिपत्तिर्न युक्ता इति साधयितुं प्रथमं विधिकोटौ दोषानाह – ननु – इति ।

[42] विज्ञानवाद्यभिमते धर्मीयरजतत्वे ज्ञानवृत्तीतिमते ।

[43] विषयतासम्बन्धेन

[44] कालिकादिसम्बन्धेनापि सिद्धस्य रजतत्वनिष्ठज्ञानवृत्तित्वस्य साधनं दोषात्मकमापन्नं बोध्यम ।

[45] रजतत्वस्य समवायसम्बन्धेन ज्ञानवृत्तिता । तथा च न सिद्धसाधनम् । - इति बौद्धैर्वक्तुं न शक्यते । समवायस्यालीकत्वेन तादृशसम्बन्धावच्छिन्नज्ञानवृत्तित्वस्य - साध्यस्याप्यलीकत्वेन बाधात् ।

[46] बौद्धानां वेदान्तिनां मीमांसकानां च । मीमांसकवेदान्तिनांमते समवायसम्बन्धं निरस्य तादात्म्यं उपादानोपादेययोः स्वीक्रियते इति अलीकत्वेन तन्मते समवायः । तथा च तत्सम्बन्धावच्छिन्नवृत्तितारूपं साध्यमपि तन्मते अलीकम् । विषयत्वसम्बन्धेन च वृत्तितायाः साध्यत्वे सिद्धसाधनमेव ।

[47] यथा समवायसम्बन्धावच्छिन्नवृत्तितामादाय बौद्धेन न विधिकोटिः समर्थयितुं शक्यते , समवायाभावेन तदवच्छिन्नवृत्तित्वस्य बाधात् तथैव भिन्नाकारज्ञाने भिन्नाकारस्य वृत्तित्वमपि न साध्यं सम्भवति । बौद्धेन घटज्ञाने रजतत्ववृत्तेरस्वीकारेण बाधात् ।

[48] अपि च रजतत्वं न घटज्ञानवृत्तीति बाध एव साध्यस्य ।

रजतत्वस्य वृत्तेर्बाध इति पाठे रजतत्वनिष्ठज्ञानवृत्तित्वस्य घटज्ञाने बाधः - इत्यर्थः ।

रजतत्वस्यावृत्तेर्बाध इति पाठे रजतत्वनिष्ठज्ञानवृत्तित्वस्य साध्यस्य बाधः , घटज्ञाने रजतत्वस्यावृत्तेः - इत्यर्थः ।

[50]देवदत्तीयभ्रमीयरजतत्वस्य यज्ञदत्तीयज्ञानेऽवृत्तेश्च वाधः ।

[51]प्रभाकरेण च पक्षाप्रसिध्या प्रत्यवस्थेयम् । नो खलु तदीये नये रजतत्वं शुक्तिगतत्वेन भासते । भ्रमानभ्युपगमेनाऽन्यगतधर्मस्याऽन्यत्राऽभासनात् ।

भगवद्रामानुजादिभिः सर्वज्ञानयाथार्थ्यवादिभिरपि[52] शुक्तिगतत्वेन रजतत्वभानमभ्युपगम्यत एव[53] । [54]सर्वस्य सर्वात्मकत्वेन त्रिवृत्करणश्रुत्या , शुक्तावपि रजतत्वस्य रजतावयवसत्त्वप्रयुक्तं सत्त्वमस्त्येव - इति , न [55]तेषां मते तु [56]पक्षाप्रसिद्धिः शक्यशङ्केति – ध्येयम् ।

## (अथ विप्रतिपत्तेर्निषेधकोटौ दोषाः)

[57]एवं ,[58] [59]विषयतादिना वृत्तेः सत्त्वाद् वाधः[60] ।

---

49 शुक्तिगतत्वेन भासमानो रजतत्वादिर्ज्ञानवृत्तिरित्यत्र पक्षस्य - शुक्तिगतत्वेन भासमानस्य रजतत्वादेरसिद्धिः । रजतत्वस्यापुरोवृत्तिशुक्तिगतत्वेनाभासमानत्वात् ।

50 बौद्धेनापि देवदत्तीयभ्रमीयरजतत्वस्य यज्ञदत्तीयज्ञानवृत्तित्वं न स्वीक्रियते इति सामान्यतया रजतत्वादेर्ज्ञानवृत्तित्वस्य साध्यत्वं बाध एव ।

51 शुक्तित्वादिनिष्ठत्वेन भासमानं रजतत्वादिः ज्ञानवृत्तिः इति बौद्धाभिमतविधिकोटौ तु प्रभाकरस्य - भ्रमानभ्युपगन्तुः पक्षाप्रसिद्धिरेव अयुक्ततासाधको हेतुः । अतः पक्षः शुक्तित्वादिनिष्ठत्वेन भासमानं रजतत्वादिः । स च न तन्मते प्रसिद्धः , भ्रमस्यैवानभ्युपगमेन रजतत्वस्य शुक्तिगतत्वेन भानासम्भवात् । ख्यातिस्वीकारे हि सः प्रसिद्धः स्यात् इति ।

52 अपिपदेन प्रभाकरसाम्यं सूचितम् । साम्यं च भ्रमानभ्युपगन्तृत्वरूपम् ।

53 अन्यत्र अन्यधर्मस्य भानं स्वीक्रियते एव । तथा च विशिष्टाद्वैतमतेन न पक्षाप्रसिद्धिर्दोषो बौद्धाभिमतकोटावापादयितुं शक्यते ।

54 ननु अन्यगतस्य धर्मस्य अन्यगतत्वेन भाने सति कथं न तैर्भ्रमः स्वीक्रियते । इदमेव भ्रमत्वं नाम यत् अन्यधर्मस्यान्यगतत्वेन भानम् इति । इति चेत् ।

न । सर्वत्र सर्वेषां धर्माणां सत्त्वस्वीकारे सति अन्यत्र अन्यधर्मत्वेन प्रसिद्धस्य भानं न भ्रमत्वमर्हति । न हि अन्यधर्मस्यान्यगतत्वेन भानमात्रं भ्रमो नाम किन्तु अन्यत्राविद्यमानस्य अन्यगतधर्मस्य अन्यगतत्वेन भानमेव इति ।

ननु सर्वत्र सर्वेषां धर्माणां सत्त्वे किं मानम् इति चेत् ।

त्रिवृत्करणश्रुतिरेव ।

55 विशिष्टाद्वैतिनां मते ।

56 बौद्धाभिमतविधिकोटिसम्बन्धिपक्षस्य - शुक्तिगतत्वेन भासमानस्य रजतत्वस्य अप्रसिद्धिः ।

57 उक्तविप्रतिपत्तेर्दुष्टत्वसाधनाय निषेधकोटेरपि दुष्टत्वं प्रदर्शयति – एवम् इत्यादिना ।

58 उक्तविप्रतिपत्तिनिषेधकोटौ - शुक्तिगतत्वेन भासमानं रजतत्वादि ज्ञानवृत्ति न इत्यत्र ।

59 शुक्तिगतत्वेन भासमानरजतत्वादेः विषयतादिना सम्बन्धेन ज्ञाने वृत्तेः सत्त्वात् निषेधकोटेर्बाधः ।

60 साध्याभावनिश्चयः ।

स्वामी शङ्करचैतन्यभारती

[61]समवायेन वृत्तित्वाभावसाधने अर्थान्तरं , [62]परेषां प्रतियोग्यप्रसिध्या साध्याप्रसिद्धिश्च स्यात् ।

[63]पुरुषान्तरीयज्ञानमादाय सिद्धसाधनम् अर्थान्तरं च अस्त्येव । [64]अन्यथाख्यात्यादिसिद्धिं विनापि साध्यस्य पक्षे उपसंहर्त्तुं शक्यत्वात् ।

[65]एवम् अन्यविषयकज्ञानमादायाप्युक्तदोषद्वयं बोध्यम् ।

[66]प्रभाकरेण च पूर्वाभिहितदिशा पक्षाप्रसिद्धिरुद्भावनीयैव ।

इति चेत् ।

## विप्रतिपत्तिकोटिद्वये उद्भावितदोषाणां परिहारेण विप्रतिपत्तिसमर्थनम्

**नैवम्** । विषयतादिसम्बन्धानां वृत्त्यनियामकत्वात् , जन्यमात्रस्य च कालोपाधित्वाभावात् ; न [67]प्रथमाभिहितो दोषः । न हि सन्ति स्वारसिकाः प्रत्ययाः यैः परवन्तो[68] वयं [69]तादृशसम्बन्धानां वृत्तिनियामकत्वमातिष्ठेमहि ।

---

61 समवायसम्बन्धेन उक्तरजतत्वादि न ज्ञानवृत्ति इतिसाधने तु । अर्थान्तरम् - प्रकृतानुपयुक्तार्थकथनम् ।

कथम् ।

समवायेन उक्तरजतत्वादेर्ज्ञानावृत्तित्वस्य इतरसम्बन्धेन ज्ञानवृत्तित्वेन सहाविरोधात् । केनापि प्रकारेणोक्तरजतत्वस्य ज्ञानवृत्तित्वसिद्धौ बौद्धस्य विजय इति ।

62 परेषां - बौद्धानाम् । प्रतियोग्यप्रसिध्या - समवायेन ज्ञानवृत्तित्वस्य अप्रसिध्या । साध्याप्रसिद्धिः - उक्तप्रतियोगिनिरूपिताभावरूपस्य साध्यस्याप्रसिद्धिः ।

63 चैत्रीयज्ञानवृत्तित्वे न मैत्रीयभ्रमविषयभूतरजतत्वस्य इति उक्तरजतत्वे ज्ञानावृत्तित्वसाधने सिद्धसाधनमेव । किञ्च अर्थान्तरमपि ; सिद्धस्य साध्यस्य उक्तविप्रतिपत्तीयविधिकोट्यविरोधित्वात् ।

64 अन्यथाख्यात्यादिसिद्धिं विनापि - साकारख्यातिपक्षेऽपि - नैयायिकादिमतास्वीकारेऽपि साध्यस्य - ज्ञानवृत्तित्वस्य पक्षे - शुक्तिगतत्वेन भासमाने रजतत्वे कालिकविषयत्वादिना सम्बन्धेन उपसंहर्त्तुं - निश्चेतुं शक्यत्वात् । तथा च साकारवादेऽपि - बौद्धमताभ्युपगमेऽपि - अन्यथाख्यात्याद्यस्वीकारेऽपि निषेधकोटेः समर्थयितुं शक्यत्वात् , न निषेधकोटेर्विधिकोट्या सह विरोध इति अर्थान्तरम् ।

65 अन्यपुरुषीयं ज्ञानमादाय यथा सिद्धसाधनमर्थान्तरं च तथैव अन्यविषयकज्ञानमादायापि सिद्धसाधनम् अर्थान्तरं च इति ।

तथा हि घटविषयकज्ञानवृत्तित्वं न बौद्धानामपि पटत्वस्येष्टम् इति सिद्धसाधनम् । एवं च निषेधकोटेर्विधिकोट्यविरोधात् अर्थान्तरं च ।

66 प्रभाकरस्य मते भ्रमस्यैवाभावेन शुक्तिगतत्वेन न रजतत्वस्य भानम् इति पक्षाप्रसिद्धत्वात् न निषेधकोटिसम्भवः तन्मतेन ।

67 न कालिकविषयतादिसम्बन्धेन ज्ञानवृत्तित्वमादाय विधिकोटौ सिद्धसाधनम् ।

68 परतन्त्राः ।

69 कालिकविषयतादीनाम् ।

स्वामी शङ्करचैतन्यभारती

[61]समवायेन वृत्तित्वाभावसाधने अर्थान्तरं , [62]परेषां प्रतियोग्यप्रसिद्ध्या साध्याप्रसिद्धिश्च स्यात् ।

[63]पुरुषान्तरीयज्ञानमादाय सिद्धसाधनम् अर्थान्तरं च अस्त्येव । [64]अन्यथाख्यात्यादिसिद्धिं विनापि साध्यस्य पक्षे उपसंहर्त्तुं शक्यत्वात् ।

[65]एवम् अन्यविषयकज्ञानमादायाप्युक्तदोषद्वयं बोध्यम् ।

[66]प्रभाकरेण च पूर्वाभिहितदिशा पक्षाप्रसिद्धिरुद्भावनीयैव ।

- इति चेत् ।

## विप्रतिपत्तिकोटिद्वये उद्भावितदोषाणां परिहारेण विप्रतिपत्तिसमर्थनम्

नैवम् । विषयतादिसम्बन्धानां वृत्त्यनियामकत्वात् , जन्यमात्रस्य च कालोपाधित्वाभावात् ; न [67]प्रथमाभिहितो दोषः । न हि सन्ति स्वारसिकाः प्रत्ययाः यैः परवन्तो[68] वयं [69]तादृशसम्बन्धानां वृत्तिनियामकत्वमातिष्ठेमहि ।

---

61 समवायसम्बन्धेन उक्तरजतत्वादि न ज्ञानवृत्ति इतिसाधने तु । अर्थान्तरम् = प्रकृतानुपयुक्तार्थकथनम् ।

कथम् ।

समवायेन उक्तरजतत्वादेर्ज्ञानावृत्तित्वस्य इतरसम्बन्धेन ज्ञानवृत्तित्वेन सहाविरोधात् । केनापि प्रकारेणोक्तरजतत्वस्य ज्ञानवृत्तित्वसिद्धौ बौद्धस्य विजय इति ।

62 परेषां = बौद्धानाम् । प्रतियोग्यप्रसिद्ध्या = समवायेन ज्ञानवृत्तित्वस्य अप्रसिद्ध्या । साध्याप्रसिद्धिः = उक्तप्रतियोगिनिरूपिताभावरूपस्य साध्यस्याप्रसिद्धिः ।

63 चैत्रीयज्ञानवृत्तित्वे न मैत्रीयभ्रमविषयभूतरजतत्वस्य इति उक्तरजतत्वे ज्ञानावृत्तित्वसाधने सिद्धसाधनमेव । किञ्च अर्थान्तरमपि : सिद्धस्य साध्यस्य उक्तविप्रतिपत्तिविधिकोट्यविरोधित्वात् ।

64 अन्यथाख्यात्यादिसिद्धिं विनापि = साकारख्यातिपक्षेऽपि = नैयायिकादिमतस्वीकारेऽपि साध्यस्य = ज्ञानवृत्तित्वस्य पक्षे = शुक्तिगतत्वेन भासमाने रजतत्वे कालिकविषयत्वादिना सम्बन्धेन उपसंहर्त्तुं = निश्चेतुं शक्यत्वात् । तथा च साकारवादेऽपि = बौद्धमताभ्युपगमेऽपि = अन्यथाख्यात्याद्यस्वीकारेऽपि निषेधकोटेः समर्थयितुं शक्यत्वात् , न निषेधकोटिविधिकोटिना सह विरोध इति अर्थान्तरम् ।

65 अन्यपुरुषीयं ज्ञानमादाय यथा सिद्धसाधनमर्थान्तरं च तथैव अन्यविषयकज्ञानमादायापि सिद्धसाधनम् अर्थान्तरं च इति ।

तथा हि घटविषयकज्ञानवृत्तित्वं न बौद्धानामपि पटत्वस्येदम् इति सिद्धसाधनम् । एवं च निषेधकोटिविधिकोट्यविरोधात् अर्थान्तरं च ।

66 प्रभाकरस्य मते भ्रमस्यैवाभावेन शुक्तिगतत्वेन न रजतत्वस्य भानम् इति पक्षस्याप्रसिद्धत्वात् न निषेधकोटिसम्भवः तन्मतेन ।

67 न कालिकविषयतादिसम्बन्धेन ज्ञानवृत्तित्वमादाय विधिकोटौ सिद्धसाधनम् ।

68 परतन्त्राः ।

69 कालिकविषयतादीनाम् ।

[61]समवायेन वृत्तित्वाभावसाधने अर्थान्तरं , [62]परेषां प्रतियोग्यप्रसिद्ध्या साध्याप्रसिद्धिश्च स्यात् ।

[63]पुरुषान्तरीयज्ञानमादाय सिद्धसाधनम् अर्थान्तरं च अस्त्येव । [64]अन्यथाख्यात्यादिसिद्धिं विनापि साध्यस्य पक्षे उपसंहर्तुं शक्यत्वात् ।

[65]एवम् अन्यविषयकज्ञानमादायाप्युक्तदोषद्वयं बोध्यम् ।

[66]प्रभाकरेण च पूर्वाभिहितदिशा पक्षाप्रसिद्धिरुद्भावनीयैव ।

- इति चेत् ।

## विप्रतिपत्तिकोटिद्वये उद्भावितदोषाणां परिहारेण विप्रतिपत्तिसमर्थनम्

**मैवम्** । विषयतादिसम्बन्धानां वृत्त्यनियामकत्वात् , जन्यमात्रस्य च कालोपाधित्वाभावात् ; न [67]प्रथमाभिहितो दोषः । न हि सन्ति स्वारसिकाः प्रत्ययाः यैः परवन्तो[68] वयं [69]तादृशसम्बन्धानां वृत्तिनियामकत्वमातिष्ठेमहि ।

---

61 समवायसम्बन्धेन उक्तरजतत्वादि न ज्ञानवृत्ति इतिसाधने तु । अर्थान्तरम् - प्रकृतानुपयुक्तार्थकथनम् ।

कथम् ।

समवायेन उक्तरजतत्वादेर्ज्ञानावृत्तित्वस्य इतरसम्बन्धेन ज्ञानवृत्तित्वेन सहाविरोधात् । केनापि प्रकारेणोक्तरजतत्वस्य ज्ञानवृत्तित्वसिद्धौ बौद्धस्य विजय इति ।

62 परेषां - बौद्धानाम् । प्रतियोग्यप्रसिद्ध्या - समवायेन ज्ञानवृत्तित्वस्य अप्रसिद्ध्या । साध्याप्रसिद्धिः - उक्तप्रतियोगिनिरूपिताभावरूपस्य साध्यस्याप्यप्रसिद्धिः ।

63 चैत्रीयज्ञानवृत्तित्वं न मैत्रीयभ्रमविषयभूतरजतत्वस्य इति उक्तरजतत्वे ज्ञानावृत्तित्वसाधने सिद्धसाधनमेव । किञ्च अर्थान्तरमपि ; सिद्धस्य साध्यस्य उक्तविप्रतिपत्तीयविधिकोट्यविरोधित्वात् ।

64 अन्यथाख्यात्यादिसिद्धिं विनापि - साकारख्यातिपक्षेऽपि - नैयायिकादिमतास्वीकारेऽपि साध्यस्य - ज्ञानवृत्तित्वस्य पक्षे - शुक्तिगतत्वेन भासमाने रजतत्वे कालिकविषयत्वादिना सम्बन्धेन उपसंहर्तुं - निश्चेतुं शक्यत्वात् । तथा च साकारवादेऽपि - बौद्धमताभ्युपगमेऽपि - अन्यथाख्यात्याद्यस्वीकारेऽपि निषेधकोटेः समर्थयितुं शक्यत्वात् , न निषेधकोटेर्विधिकोटिना सह विरोध इति अर्थान्तरम् ।

65 अन्यपुरुषीयं ज्ञानमादाय यथा सिद्धसाधनमर्थान्तरं च तथैव अन्यविषयकज्ञानमादायापि सिद्धसाधनम् अर्थान्तरं च इति ।

तथा हि घटविषयकज्ञानवृत्तित्वं न बौद्धानामपि पटत्वस्येष्टम् इति सिद्धसाधनम् । एवं च निषेधकोटेर्विधिकोट्यविरोधात् अर्थान्तरं च ।

66 प्रभाकरस्य मते भ्रमस्यैवाभावेन शुक्तिगतत्वेन न रजतत्वस्य भानम् इति पक्षस्याप्रसिद्धत्वात् न निषेधकोटिसम्भवः तन्मतेन ।

67 न कालिकविषयतादिसम्बन्धैर्ज्ञानवृत्तित्वमादाय विधिकोटौ सिद्धसाधनम् ।

68 परतन्त्राः ।

69 कालिकविषयतादीनाम् ।

स्वामी शङ्करचैतन्यभारती

## नैयायिकं प्रति परिष्कृता प्रथमविप्रतिपत्तिस्साकारख्यातिगोचरा

[70]अभ्युपेत्य परं समादध्मः ।

तत्पुरुषीयतद्धर्मीय-शुक्तिनिष्ठपुरोवर्तित्वावच्छिन्नविशेष्यतानिरूपितप्रकारता-श्रयो रजतत्वादिस्तत्पुरुषीयतज्ज्ञानतादात्म्यापन्नो न वा ।

विधिकोटिर्ज्ञाने प्रसिद्धा । तादात्म्यसम्बन्धस्याभेदाभिषिक्तस्यानभ्युपगतावपि नैयायिकातिरिक्तैः ज्ञानात्मकत्वं तु नाप्रसिद्धम् ।
तत्पुरुषीयत्वादिनिवेशात्पुरुषभेदनिबन्धनो ज्ञानभेदनिबन्धनश्च दोषोऽपाहारि ।
'एकदा च न द्वाभ्यां विवाद' – इति सम्प्रदायात् ; नैयायिकादिना विचारप्रसङ्गे उक्ता सरणिः ।

## प्राभाकरं प्रति परिष्कृता प्रथमविप्रतिपत्तिस्साकारख्यातिगोचरा

प्रभाकरेण सह कथासङ्गे तु -

तत्पुरुषीयतत्प्रवृत्ति-(पुरोवर्तिशुक्तिविशेष्यकप्रवृत्ति)-जनकज्ञानविषयरजतत्वं तादृशज्ञानात्मकं न वा
– इति विप्रतिपाद्यम् ।

मा नाम चुम्बि भ्रान्त्या प्रभाकरः । भेदागृहीतिं तु प्रवृत्तिजननीपदे सोऽभ्यषिञ्चदेव ।
तथा च , निषेधकोटिरपि न [71]पूर्वाभिहितदूषणालिङ्गिता । ज्ञानभेदस्यैव [72]तत्र साध्यत्वात् ।

## अथासत्संसर्गख्यातिविप्रतिपत्तिः ।

**असत्ख्यातिर्द्विधा** । **केचित्** संसर्गांश एवासत्त्वं प्रतिपेदिरेऽपरांशे सत्त्वमेव । **माध्यमिकास्तु** सर्वांश एवासत्त्वमन्वमिन्वत ।

### तत्र पूर्वस्यां विप्रतिपत्तिः

असत्तादात्म्यविषयकमिदं रजतमिति ज्ञानं स्वातिरक्तप्रमेयालम्बनं न वा ।

---

[70] कालिकविषयतादीनां वृत्तिनियामकत्वमभ्युपेत्यापि परिहारोऽत्र उच्यते ।

[71] रजतत्वं ज्ञानवृत्ति न इति या निषेधकोटिराद्यविप्रतिपत्तावासीत् तत्र विषयताकालिकादिना रजतत्वस्य ज्ञानवृत्तित्वमादाय यो बाधः स न ; प्रभाकरपरिगृहीतायां परिष्कृतविप्रतिपत्तौ निषेधकोटौ रजतत्वस्य ज्ञानाभेदस्यैव निषिध्यमानत्वात् । तथा च रजतत्वस्य ज्ञानवृत्तित्वमादाय ये दोषा आपादितास्तेषां रजतत्वज्ञानयोर्भेदाभेदविप्रतिपत्तौ नोपयोगो कोटिदूषणे इति ।

[72] परिष्कृतविप्रतिपत्तौ निषेधकोटौ प्राभाकरेण ज्ञानभेदस्यैव साध्यमानत्वात् । ।

अत्र विधिरसत्संसर्गख्यातिमभ्युपगच्छतः । निषेधश्च विज्ञानवादिनः ।

ननु पक्षे तादात्म्येऽसत्त्वं किमात्मकं प्रावेशि । अलीकत्वात्मकं तु न निवेश्यम् । असत्संसर्गख्यातिवादिना तादृशस्यैवासत्त्वस्य भानस्वीकारेऽपि वहिष्ट्वातिरिक्तस्य ज्ञानाकारतामतालम्बिना तादात्म्यस्यं ज्ञानाकारत्वमुपगन्तव्यं न त्वलीकत्वम् । ज्ञानाकारस्यापि चालीकत्वे वहिष्ट्वावहिष्ट्वयोरलीकत्वानलीकत्वकृतो विशेषः स्वदर्शनसिद्धो वाध्येत । असत्ख्यातिपर्यवसायिता च न शक्यवारणा भवेत् । पक्षतावच्छेदकैक्यं चोभाभ्यां वादिप्रतिवादिभ्यामनुरोद्धव्यमेवेत्यसत्संसर्गभानं भणता च ज्ञानाकारतानङ्गीकारान्न ताद्रूप्येण परिभाषितमप्यसत्त्वं निवेशार्हमिति चेत् ।

अलीकत्वमेवासत्त्वं निवेश्यम् । तच्च विज्ञानवादिना - यथेदन्त्वे वहिष्ट्वं च प्रतीयमानेऽपि स्वीकृतं , ज्ञाने इदन्ताया वहिष्ट्वस्य वाऽभावात् ; तथा तुल्ययुक्त्या ज्ञाने इदन्तादात्म्यस्याप्यभावाज्ज्ञाने इदन्तादात्म्यमलीकमेवाभ्युपगमनीयम् । तथा चासत्तादात्म्यविषयकं पक्षीभूतं ज्ञानमुभयोः प्रसिद्धमिति न दोषः । अलीकत्वं च केवलान्वय्यत्यन्ताभावप्रतियोगित्वे सति उत्पत्त्यादिशून्यत्वम् । सत्यन्तस्य वेदान्तिनां घटादिसाधारण्यात् , विशेष्यदलम् । तावन्मात्रोक्तौ तेषां ब्रह्मण्यतिव्याप्तिरतो विशेषणदलम् । तैर्नैयायिकैरिव विभावपि केवलान्वय्यत्यन्ताभावप्रतियोगित्वं नाभ्युपागमि । ब्रह्मभिन्नत्वे सतीति – तु लघीयः । तथापि नैयायिकानां गगनादिष्वतिव्याप्तिः । अतो गुणानाश्रयत्वे सत्यभावत्वानाश्रयत्वमपि देयम् । तेनाश्रयनाशजन्याश्रितध्वंसेऽपि नातिव्याप्तिः । नित्यद्रव्यभिन्नत्वे सत्याश्रयनाशजन्यध्वंसभिन्नत्वं प्रतियोगिनि विशेषणं यद्यपि दीयेत , नित्यद्रव्याभावस्य केवलान्वयित्वेन सत्यन्तेन तत्प्रतियोगिनो नित्यस्य व्यावर्त्तनात् ; तथापि वौद्धाना नित्यस्यैवाप्रसिध्या तद्घटितं विशेषणमप्रसिद्धं स्यादिति । नैयायिकाद्यभिमतनित्यभिन्नत्वे सतीत्येवं तु दातुं शक्यते । वस्तुतस्तु गगनादीनां केवलान्वय्यत्यन्ताभावप्रतियोगित्वं न युक्तिसहम् । तदन्तरेण कस्याश्चिदनुपपत्तेरभावात् , इह गगनं नास्तीत्यप्रतीतेश्च । गगनादि तादृशात्यन्ताभावप्रतियोगि वृत्तिनियामकसंयोगाप्रतियोगित्वात् – इत्याद्यनुमानानामनुकूलतर्कविधुरतयाऽसाधकत्वात् --- इति केवलान्वय्यत्यन्ताभावप्रतियोगित्वे सत्युत्पत्त्यादिशून्यत्वमेवालीकत्वमवद्याचुम्वितम् । विज्ञानवादिनाऽसत्संसर्गभानवादिना च सत्त्वेन यदभ्युपगतं तद्भिन्नत्वेनानुगमय्याऽर्थक्रियाकारित्वशून्यत्वरूपेण वा पक्षेऽसत्त्वं शक्यप्रवेशमिति वोध्यम् ।

स्वशब्दस्य समभिव्याहृतपरत्वाच्च , पक्षीभूतज्ञानातिरिक्तं स्वपदेनादाय विधिकोटौ सिद्धसाधनं योगाचारेण निषेधकोटौ वाधश्च न दातुं पार्यते ।

व्यासज्यवृत्तिधर्मावच्छिन्नस्वतियोगिकभेदं स्वस्मिन्नादाय विधिकोटौ सिद्धसाधनं , निषेधे च वाधः सम्भाव्यते – इति व्यासज्यवृत्त्यनवच्छिन्नत्वं तद्व्यक्तित्वपर्याप्तावच्छेदकताकप्रतियोगिताकत्वं वा भेदे निवेश्यम् । तथा च , केवलान्वय्यत्यन्ताभवप्रतियोगित्वविशिष्टोत्पत्त्यादिशून्यतादात्म्यविषयताकमिदं रजतमिति ज्ञानं व्यासज्यवृत्तिधर्मानवच्छिन्नस्वप्रतियोगिताकभेदविशिष्टप्रमेयविषयताकं न वेति – फलितम् । प्रभाकरमते च तादात्म्यानवगाहनात् न तेन सहैषा वितिपत्तिरिति वोध्यम् । पक्षीभूतज्ञानातिरिक्तप्रमेयालम्वनत्वमन्यस्मिञ्ज्ञाने प्रसिद्धम् । निषेधश्चानालम्वने वहिष्ट्वादौ प्रसिद्ध इति ।

स्वामी शङ्करचैतन्यभारती

## अथ सर्वासत्ख्यातिविप्रतिपत्तिः

सर्वांशेऽसत्त्वस्वीकर्तृविप्रतिपत्तिस्त्विदं रजतमिति ज्ञानमसन्मात्रविषयकं न वेति । विधिनिषेधौ शशशृङ्गादिघटादिज्ञानयोः प्रसिद्धाविति कश्चित् । तन्न । विकल्पवृत्तेः सर्वैरनङ्गीकारात् , शशशृङ्गादिज्ञानस्य संसर्गांश एवासद्विषयकत्वस्य वक्तुं शक्यत्वात् , माध्यमिकनये घटादिज्ञानस्याप्यसद्विषयकत्वाच्च । असत्त्वं ज्ञानविषयतासमनियतं न वेति – तु ज्यायः । ज्ञानविषयतायामभिधेयत्वादौ च विधेर्घटत्वादौ च निषेधस्य प्रसिद्धेः ।

अथ सत्ख्यातविप्रतिपत्तिः

भ्रमस्य सन्मात्रविषयकत्वमते भ्रमविषयत्वं प्रमाविषयत्वव्याप्यं न वेति ।

यत्किंचित्प्रमितं तदेवाऽन्यत्र भ्रान्तिविषयतया भासत इति सन्मात्रविषयतावादिनः ।

भावो घटादावभावश्च गगनादौ प्रसिद्धः । गगनस्यावृत्तेः सामानाधिकरण्यरूपव्याप्त्यनाश्रितत्वात् । गगनादेरपि जनिमुपगन्तॄणामत एव तेषां वृत्तिमत्त्वं स्वीकुर्वतां ब्रह्मवादिनां मते गगनादेर्व्याप्तिमत्त्वसम्भवेऽपि शशशृङ्गादौ निषेधप्रसिद्धिर्मन्तव्या । भ्रमस्य चासंवादिप्रवृत्तिजनकज्ञानत्वेन निवेशेऽस्या विप्रतिपत्तेः प्रभाकरेण सह विवादेऽप्युपयोगः ।

अथाख्यात्यन्यथाख्यातिविप्रतिपत्तिः

अख्यात्यन्यथाख्यातिवादिनोर्विवादे – ज्ञानत्वं विशेष्यावृत्तिप्रकारकवृत्ति न वा ।

शुक्तौ रजतत्वं समवायेन रजतं वा तादात्म्येनावर्त्तमानमपि प्रकारतया भासत इत्यन्यथाख्यातिवादिनो नैयायिका भट्टादयश्च विधिकोटिमालम्बन्ते । निषेधस्तु प्राभाकरैः सर्वप्रत्यययाथार्थ्यवादिभिर्भगवद्रामानुजादिभिश्चाश्रीयते ।

तत्र भावो भेदाग्रहजन्यायां प्रभाकरेणापि विशेष्यावृत्तिप्रकारताकत्वेनोपगतायामिच्छायां निष्फलप्रवृत्तिजनन्यां वर्त्तमान इच्छात्वे प्रसिद्धः । अभावस्तु प्रमात्व इति विवेकः ।

प्रकाराणामवृत्तित्वसिद्धिमादायार्थान्तरं मा भूदतः प्रकारेषु वृत्तिमत्त्वं विशेषणं प्रक्षेप्यम् ।

विशेषतोऽपि – रजतेच्छाजन्यशुक्तिविषयकप्रवृत्तिजनकं रजतज्ञानं शुक्तिविषयकं न वा ।

तादृशं पुरोवर्त्तिविशेष्यकं ज्ञानं रजतत्वप्रकारकं न वा ।

पुरोवर्त्तिविषयकरजतविषयकज्ञानयोः प्रभाकरेण पृथक्तया स्वीकृतयोः प्रत्येकं भिन्नत्वेनागृहीतयोः प्रवर्त्तकयोः पुरोवर्त्तिविषयकं न रजतत्वप्रकारकं रजतविषयकं च न शुक्तिविषयकमिति निषेधः प्राभाकरीयः । विधिस्तु नैयायिकादीनाम् । तैः पुरोवर्त्तिरजतविषयकैकज्ञानाभ्युपगमात् । ततश्च रजतज्ञाने शुक्तिविषयकत्वसिद्धिरनुभवैक्ये पर्यवस्यति । एवं शुक्तिज्ञाने रजतविषयकत्वसिद्धिरपि ।

प्रथमायां विमतौ तादृशप्रवृत्तिजनकं ज्ञानं प्रभाकरमते स्मृतिः नैयायिकादिमते च विशिष्टानुभवः । तथा च स्मृतेः पक्षत्वे नैयायिकादेर्बाधो विशिष्टानुभवस्य तत्त्वे गुरुणाऽऽश्रयासिद्धिरुद्भाव्येति विकल्प्यमाने यद्यपि दोषोन्मेषस्तथाप्यधीयं तादृशविकल्पकल्पनामुभयमतसाधारणेन तादृशरजतज्ञानत्वेन पक्षतेति न दोषः ।

द्वितीयस्यां विमतौ तु न तादृशशङ्काकलङ्कः , उभयैः पुरोवर्तिविषयकानुभूतेरेवोपगमात् । युक्तश्च मतद्वयसाधारण्येन पक्षत्वम् । नो चेन्निर्वह्नि पर्वतः पक्षः सवह्निर्वा , आद्ये बाधोऽपरत्र सिद्धसाधनमिति पक्षतोच्छेदादनुमितिमात्रोच्छेदः कथमुच्छेद्यः ।

अथानिर्वाच्यख्यातिविप्रतिपत्तिः

अनिर्वचनीयख्यातौ – ख्यातिनिरुक्तयो दुष्टतानियामकसम्बन्धावच्छिन्नदोषत्वावच्छिन्नाभाववत्यो न वा ।

अत्र ख्यातिशब्देन सर्वाः ख्यातयो ग्रहीतुं शक्यन्ते । अख्यातेरपि परीक्षकेषु ख्यातित्वेन व्यवहारात् । परन्तु , एकदैकेनैव सह विवादाद्विमतेर्विशेष एव पर्यवसानं 'अन्यथाख्यातिनिर्वचनं दोषत्वावच्छिन्नाभाववन्न वेति' – रीत्या । तथा चास्त्वख्यातेर्बहिर्भावो , न काचित्क्षतिः ।

अत्र विधिर्वेदान्तिभिन्नस्य निषेधश्च वेदान्तिनः ।

यत्किञ्चिद्दोषाभावस्य वेदान्तिनाप्युररीकारात्सामान्याभावनिवेशो विहितः ।

ननु सामान्यविमतावनिर्वचनीयख्यातेरपि पक्षतावच्छेदकाक्रान्तत्वात्तत्र निषेधकोटौ दोषवत्तासाधने कथन्नौपनिषदस्य सिद्धान्तहान्या निग्रह इति चेत् । न । चिदतिरिक्तस्य सर्वस्याप्यनिर्वाच्यतामुपगतवतस्तस्यानिर्वाच्यख्यातेरप्यनिर्वाच्यत्वादेवोक्तदोषानवकाशात् । न चैवमपि विधिवादिनोऽनिर्वाच्यख्यातिमनभ्युपयतः पक्षतावच्छेकालिङ्गितायां तस्यां दोषत्वावच्छिन्नाभावसाधनेन परमतानुमतिनिगृहीतिसंश्लेषः किमिति नेत्यभिधातव्यम् । अतोऽपि दोषाद्विशेषे पर्यवसानस्यैव भणितत्वात् । वस्तुतस्तु – नेयं शङ्काऽपि समुन्मिषति । प्रौढिवादमालम्ब्य सर्वस्यापि ख्यातिजातस्य दोषवैधुर्य्यं साधयतो वेदान्तिमतानुमतिप्रसक्त्यभावात् । नो खलु ते तस्याम् (अनिर्वाच्यख्यातौ) दोषराहित्यं जगुः , अनिर्वाच्यत्वादेव तस्या अपि ।

विधिप्रसिद्धिः परस्मिन्ब्रह्मणि , निषेधप्रसिद्धिश्चोभयवादिसम्मते कस्मिंश्चिद्दुष्टे लक्षण इति ।

अन्यसम्बन्धेन दोषाभावमादाय दोषनिवृत्त्यै सम्बन्धविशेषो निवेशितः ।

विमतं ज्ञानं मुख्यविशेष्यातिरिक्तांशे निरुक्तिविषयतावद्विषयकं न वा ।

कस्य का कोटिरिति पूर्ववत् ।

यद्यपि वाङ्मनसागोचरे परस्यां चिति निरुक्तिविषयताया असम्भवात्तज्ज्ञाने विधिर्न प्रसिद्धिमर्हति , तथापि शून्यवादापत्तिभिया स्वतःसिद्धत्वादिना तस्या अपि निर्वाच्यत्वेनाभ्युपगमाद्रज्जुसर्पः सन्निति ज्ञानमादाय तत्रैव प्रसिद्धिर्बोध्या ।असत्त्वेन निर्वाच्यत्त्वेनासत्त्वप्रकारकनिरुक्तिविशेष्यत्वेनाभ्युपगते तुच्छेऽपि प्रसिद्धिः सुलभा ।

स्वामी शङ्करचैतन्यभारती

विमतज्ञानविषये सत्त्वप्रकारकनिरुक्तिविषयताऽभावमभ्युपगच्छता सह वादेऽसत्त्वप्रकारकनिरुक्तिविषयतावद्विषयकत्वाभावमात्रं साध्यमसत्त्वप्रकारकनिरुक्तिविषयतावद्विषयकत्वाभावं स्वीकुर्वता च सह विवादे सत्त्वप्रकारकनिरुक्तिविषयतावद्विषयकत्वाभावमात्रं साध्यं , तावतैव वेदान्तिनोऽभीष्टसिद्धेः । तथा च निषेधप्रसिद्धिरपि न दुर्लभा । पूर्वस्मिन्साध्ये शून्यतादिज्ञाने ब्रह्मज्ञाने च मतभेदेन साध्यप्रसिद्धिः । बौद्धैरपि शून्यतायाः पारमार्थिकत्वाभ्युपगमात्तस्या असत्त्वप्रकारकनिरुक्तिविषयत्वाभावात् । उत्तरस्मिन्साध्ये तु तुच्छज्ञाने प्रसिद्धिर्बोध्या । 'सर्वं ज्ञानं धर्मिण्यभ्रान्तं प्रकारे तु विपर्यय' – इति नियतेर्जागरूकत्वेऽपि वेदान्तिना विशेष्यांशस्येदमादेरप्यनिर्वाच्यत्वाभ्युपगमान्न विधौ सिद्धसाधनं नापि निषेधे बाधः । ननु "सर्वप्रत्ययवेद्येऽस्मिन्ब्रह्मरूपे व्यवस्थिते" - इति भणितिमुल्लासयता श्रुत्यन्तानुसारिणा कथं नाम न विधौ सिद्धसाधनं देयं निषेधे च कथं न बाधो , निर्वाच्यब्रह्मणो विषयत्वादिति चेत् । मैवम् । सर्वस्मिन्नंशे निरुक्तिविषयविषयकत्वस्य विधौ तदभावस्य चापरकोटौ साधने उक्तशङ्काकलङ्काप्रसरादिति ।

एवं विप्रतिपत्त्यन्तरम्

देवदत्ताज्ञानविषयतावच्छेदकत्वं देवदत्तासंवादिप्रवृत्तिजनकज्ञाननिष्ठविषयितानिरूपितमुख्यविशेष्यताऽनिरूपितप्रकारताश्रयवृत्त्यत्यन्ताभावप्रतियोगि न वा ।

प्रतीतिमात्रजीवनं शुक्तौ भासमानं रजतादि न ज्ञानात्पूर्वं क्वापि वर्त्तते , किन्तु , ज्ञातसत्ताकमेवेति वदतां वेदान्तिनां विधिर्निषेधश्च तदतिरिक्तानाम् ।

अत्र यद्यपि – 'अज्ञातत्वं किञ्चिन्निष्ठात्यन्ताभावप्रतियोगि न वे'-त्युक्तावज्ञातत्वाभावो ज्ञातत्वं भूतकालिकज्ञानविषयत्वं , तस्य च भूयस्सु विषयेषु सर्वमते सत्त्वेऽपि न सिद्धसाधनं , भावरूपाज्ञानस्य साधनात् , तद्विषयत्वाभावस्य च वेदान्त्यतिरिक्तेन केनापि भ्रमविषयेषु रजतादिष्वस्वीकारात् , सुखादावपि न सिद्धसाधनं , नैयायिकादिभिस्तेषां मानसप्रत्यक्षाभ्युपगमात्प्रत्यक्षं प्रति विषयस्य कारणत्वात्पूर्वं सत्ताया अवश्यमभ्युपगन्तव्यतयाऽज्ञाततया तेषां सत्त्वावश्यम्भावात् ; तथाप्ये-तावता वेदान्तिनो न किमप्यभिलषितं सिद्ध्यति ब्रह्मण्येवाज्ञानविषयतायास्तेनाङ्गीकारादन्यत्र सर्वत्र तदभावस्य तन्मते सत्त्वेन प्रातीतिक एवाज्ञातसत्ताकत्वस्य विश्रान्तेरतोऽज्ञानविषयतावच्छेदकत्वं पक्षितं , तस्य च व्यावहारिक एव सत्त्वात्तदत्यन्ताभावः प्रतीतिके सिध्यन्वेदान्त्यभिलषितं पूरयितुं चेष्टते तथापि न पूरयत्यसतश्चिदनवच्छेदकत्वेन तदवच्छिन्नचितावज्ञातताया असत्त्वेनासतोऽज्ञानविषयतावच्छेदकत्वाभावात्तत्र पक्षाभावसत्त्वेनार्थान्तरतापत्तेरतो भ्रमविषयस्यैवात्यन्ताभावानुयोगित्वेन निवेशावश्यकत्वाद्भ्रमविषयत्वेन च निवेशे प्रभाकरस्याप्रसिद्धेरसंवादिप्रवृत्तिजनकत्वेन भ्रमं निवेश्य तदीयविषयस्यात्यन्ताभावानुयोगित्वेन निवेशः।

अन्यपुरुषीयाज्ञानविषयतावच्छेदकत्वस्यान्यपुरुषीयभ्रमविषयेऽभावमादायार्थान्तरता मा भूदिति पक्षे साध्ये च पुरुषविशेषो न्यवेशि ।

## ख्यातिवादः

'सर्वं ज्ञानं धर्मिण्यभ्रान्तम्' – इति रीत्या विशेष्यस्येदमादेर्व्यावहारिकत्वेन च तदवच्छिन्नचित्यज्ञातत्वसत्त्वात्तस्याज्ञानविषयतावच्छेदकत्वाद्भ्रमविषयत्वाच्च तत्र पक्षाभावसाधने वाधात्तद्व्यावृत्त्यर्थं विषयताश्रयेत्यनुक्त्वा प्रकारताश्रयेत्यवाचि ।

प्रकारताया इदन्त्वेऽपि सत्त्वात्तस्य च व्यावहारिकतयाऽज्ञानविषयतावच्छेदकत्वसम्भवान्मा भूद्वाधोऽतो मुख्यविशेष्यताऽनिरूपितप्रकारताश्रयस्यात्यन्ताभावानुयोगितया निवेशः । तथा च सति प्रकारताऽसमानाधिकरणविशेष्यताया एव मुख्यतयेदमश्च क्वाप्यप्रकारत्वान्मुख्यविशेष्यतायास्तत्रैव वर्त्तमानतया रजते विशेष्यताया रजतत्वनिष्ठप्रकारतानिरूपितायाः सत्त्वेऽपि तादात्म्यसम्वन्धावच्छिन्नेदन्निष्ठविशेष्यतानिरूपितप्रकारताया अपि सत्त्वेन प्रकारतासमानाधिकरणतया मुख्यत्वाभावान्मुख्यविशेष्यतानिरूपितप्रकारताया अधुनेदन्त्व एव सत्त्वेन मुख्यविशेष्यताऽनिरूपितप्रकारतायास्तत्राभावात्तद्वारणात् ।

इदं सर्वं 'इदं रजतम्' – इति विशेषाकारं ज्ञानं साध्ये प्रवेश्यैव वक्तुं शक्यते , न तु 'रजतमिदम्' – इति ज्ञानं , तथा सति रजतस्यैव मुख्यविशेष्यताश्रयत्वेन तदनिरूपितप्रकारताया इदन्त्वे सत्त्वेन तत्राज्ञानविषयतावच्छेदकत्वाभावस्यानिष्टस्य सिद्ध्यापत्त्या वाधो वाऽर्थान्तरं वा भवेत् ।

ननु प्रभाकरसङ्ग्रहोपायं नोपलभामहे । असंवादिप्रवृत्तिजनकत्वेन सङ्गृह्येतां तदभिमते ज्ञाने , न तु ज्ञानम् । विषयतानां निरूप्यनिरूपकभावो हि सति ज्ञानैक्ये समस्ति , न तु ज्ञानद्वैते । उररीचक्रे च तेन ज्ञानद्वयं ग्रहणस्मृत्यात्मकम् । तथा च , ज्ञानद्वयीमुख्यविशेष्यते इदमि रजते च वर्त्तेते , इदन्त्वे रजतत्वे च मुख्यविशेष्यतानिरूपितप्रकारते – इति मुख्यविशेष्यताऽनिरूपितप्रकारते एव न प्रसिद्धिपथमधिरोहत इति कथमेषा विप्रतिपत्तिस्तेन सह कथायामुपयुज्यतामिति चेत् । मोपयुज्यत । पूर्वाभिहितविप्रतिपत्तय एवोपयोक्ष्यन्ते । ज्ञानैक्यं वदद्भिः साकमेवैषा कथायां साफल्यमावक्ष्यति । तथा च , भ्रमत्वेनैव भ्रमो निवेक्ष्यते ।

ननु वेदान्तिभिरेव ज्ञानैक्यं न स्वीक्रियते , इदमि हि मनोवृत्तिविषयतामाचक्षते ते , ब्रुवते च रजतेऽविद्यावृत्तिविषयतामित्यभिहितदोषोन्मेषान्नैषा विमतिः सुधीधीपद्धतिमध्यास्त इति चेत् । कथमेतत् । नो खलु ते प्राभाकरैः सम्मन्वते । आरोपं संमर्थयमाना हि तेषां वाचोभङ्ग्यो विलसन्ति । ज्ञानद्वयीमालम्वमाना अपि ते ज्ञानयोरध्यासमभ्युपगत्य ज्ञानयोस्तादात्म्यप्रतीतिमेव प्रवर्त्तकतापदेऽभिषिञ्चन्ति । अमुमेव च ज्ञानाध्यासमभिलपन्ति । तस्मादनाविलैवासौ ।

ननु वाधग्रहणकाले रजतादौ पक्षासत्त्वमादायार्थान्तरता पिशाची पृष्ठारूढैवेति चेत् । कदाचिदपि तत्र सतोऽज्ञानविषयतावच्छेदकत्वस्य त्रैकालिकतन्निष्ठात्यन्ताभावाप्रतियोगित्वात् । अर्थान्तरतां ददानस्य निरनुयोज्यानुयोगापत्तेः । तत्र भवति च न भवति चेति व्याहतम् । अत एवाव्याप्यवृत्त्यत्यन्ताभावमादायानुमानस्य कृतार्थतयाऽर्थान्तरतेति पराहतम् । तस्य प्रमाणागोचरत्वात् । संयोगाभावादिस्थलेऽवच्छेदकभेदेन वृक्षस्य भेदसम्भवात् । यदाहुः

अविरुद्धविशेषणद्वयप्रभवत्वेऽपि विशिष्टयोर्द्वयोः ।
घटते न यदैकता तदा सुतरां तद्विपरीतरूपयोः ॥
इति ।

स्वामी शङ्करचैतन्यभारती

कुण्डली (-अस्त्री) देवदत्त इत्यत्रापि यदा तत्तद्विशेषणालिङ्गितस्य देवदत्तस्य भेदस्तदा भावाभावादिस्थले तु कैमुतिकन्यायागतो भेद इति भावः ।

अत एव -पूर्वं घटाधिकरणे पुनश्च तदपनयानन्तरं तदधिकरणे तदत्यन्ताभाव - इति निरस्तम् । प्रतियोगिसमानाधिकरणेऽप्यत्यन्ताभावत्वमिति रुचिप्रमाणकमेव भवेत् । यदाह वर्धमानः कुसुमाञ्जलिप्रकाशे क्लृप्तसंसर्गाभाववैधर्म्येऽप्यबाधितप्रतीतिबलादुक्तस्थलेषु सामयिक एवाभावस्तुरीय उपगन्तव्यः । यदि च क्लृप्तविशेषाणां बाधात्सामान्याभावत्वमपि तत्र स्थातुं नोत्सहते इति गद्यते , तदा संसर्गाभावद्वयेन सादित्वरूपवैधर्म्याद्ध्वंसोऽपि न प्राणान्धारयितुं क्षमेतेति प्रतिवन्द्या स्थातव्यम् । यदि चावाधितधं(ध्वं - शुद्धपाठः)सविशेषप्रतीतिरेव विशेषमनादायापर्यवस्यन्ती सामान्यं बलादानयति । तर्हि प्रकृतेऽप्यन्यसंसर्गाभाववैलक्षण्येऽपि सामयिकोऽभाव एवेति तुल्यम् । तदेतदर्थतोऽपाठि ।

यदि चोक्तस्थलेष्वत्यन्ताभाव एवेत्याग्रहस्तज्ज्ञानकालीनसम्बन्धेन च प्रतियोग्यसामानाधिकरण्यमपि न दुष्यति , तदा प्रकृतेऽपि सम्बन्धविशेषमन्त्रेणैवार्थान्तरपिशाच्युत्सारणीया । तथा च देवदत्ताज्ञानविषयतावच्छेदकत्वं देवदत्तभ्रान्तीयमुख्यविशेष्यताऽनिरूपितप्रकारताश्रयनिरूपितसम्बन्धविशेषावच्छिन्नवृत्तिताकात्यन्ताभावप्रतियोगितावन्न वेति फलितम् ।

सदसत्ख्यातिविप्रतिपत्तिः

सद्भेदासद्भेदौ किञ्चिन्निष्ठव्यासज्यवृत्तिधर्मानवच्छिन्नात्यन्ताभावप्रतियोगिनौ न वा ।

विधिर्वेदान्त्येकदेशिनामनिर्वाच्यवादिनां नागेशादीनां निषेधस्तु वेदान्त्यादीनाम् ।

ब्रह्मणि तुच्छे च सदसद्भेदयोरुभयत्वावच्छिन्नात्यन्ताभावसत्त्वाद्विधौ सिद्धसाधनं , निषेधे च बाधो मा भूदिति – व्यासज्यवृत्तिधर्मानवच्छिन्नत्वमभावे व्यशेषि ।

एवञ्च ब्रह्मतुच्छभिन्ने जगति प्रातिभासिके व्यावहारिके च सदसदसत्त्वं (सदसत्त्वं - शुद्धपाठः) पर्यवस्यति । इदमेवानिर्वाच्यत्वम् ।

अधिष्ठानगतसत्त्वस्य बहिरनुत्पन्नेऽसत्येव बुद्धिसति शुक्तिरजतादौ समारोपः । अविद्ययाऽपरोक्षज्ञानोत्पत्त्यैव रजतादेरपरोक्षतोपपत्तौ जनिस्वीकारे गौरवमिति तदाशयः ।

एवं विप्रतिपत्त्यन्तरमपि –

रजतत्वविशिष्टं तादात्म्यसम्बन्धेन रजतत्वविशिष्टसम्बन्धितया ज्ञायमानसर्वनिष्ठत्रैकालिकसंसर्गाभावीयतादात्म्यसम्बन्धावच्छिन्नरजतत्वावच्छिन्नप्रतियोगिताविशिष्टं न वा ।

विधिर्वेदान्तिनः ।

रजतत्वावच्छिन्नप्रतियोगिताकघटाभावे प्रसिद्धिः ।

प्रातीतिकव्यावहारिकसाधारणरजतादावनिर्वाच्यत्वसिद्ध्यर्थं चैषा विप्रतिपत्तिरिति वोध्यम् ।

रजतत्वं स्वावच्छिन्न(वत्त्वे)त्वेन प्रतीयमानयावन्निष्ठाभावीयत्व-स्वावच्छिन्नत्वेति-सम्बन्धद्वयेन स्वविशिष्टप्रतियोगितासमानाधिकरणं न वेति तु पूर्वस्यैव विट्ठलेशीयो निष्कर्षः ।

तत्र प्रथमसम्बन्धानुक्तौ रजतानधिकरणे रजतत्वावच्छिन्नाभावसत्त्वात्सिद्धसाधनम् । द्वितीयसम्बन्धानुक्तौ च घटत्वेन रजताभावमादाय सिद्धसाधनम् । - इति सम्बन्धद्वयोपादानम् ।

न च प्रातीतिकरजतत्वेन व्यावहारिकरजताभावमादाय सिद्धसाधनव्युदासाय स्वसामानाधिकरण्यसम्बन्धोऽपि देय इति शक्यम् । प्रातीतिकव्यावहारिकोभयसाधारणरजतत्वस्वीकारेणैव प्रातीतिकेऽपि प्रवृत्त्याद्युपपत्त्या प्रातीतिकरजतत्वस्य शशविषाणायमानत्वात् । प्रत्युतोक्तसम्बन्धस्य दाने साध्यप्रसिद्धेर्दुर्लभत्वापत्तेः । न चोभयसाधारणरजतत्वस्वीकारे प्रातीतिकरजतेनापि कटकादिर्निर्मीयेतेति वाच्यम् । फलवलेन व्यावहारिकत्वविशिष्टस्यैव रजतस्य कारणत्वं कटकादिनिरूपितं कल्प्यते । प्रातीतिके च व्यावहारिकत्वाभावान्न दोषः ।

॥इति विप्रतिपत्तयः॥

॥अथ साकारख्यातिनिरूपणम्॥

अस्ति तावद्विज्ञानं स्वप्रकाशं कदाचिदपि संशयाद्यगोचरत्वात् । नो खलु घटोऽस्वप्रकाशः कदाचिदपि संशयाद्यगोचरः । तथा च स्वप्रकाशत्वं विनाऽनुपपन्नं जिज्ञास्यत्वे सत्यपि संशयाद्यगोचरत्वं तदनाक्षिप्य न शाम्यति । अनुव्यवसायधाराविश्रान्तेः सुषुप्त्याद्यभावप्रसङ्गेनावश्याभ्युतव्येयत्वेन नानुव्यवसायमभ्युगत्याप्युक्तो हेतुः शक्योपपाद इत्यन्यत्र विस्तरः । तथा च शुक्तौ जायमानमिदं रजतमिति ज्ञानमपि स्वात्मानमेव प्रकाशयेन्न त्वतिरिच्यामानमपि स्वापेक्षया । न हि घटे भासमाने पटो नियमेन भासते । भासमाने चेदं रजतमिति ज्ञाने रजतं नियमेन भासमानं तदात्मकमेव भवेत् । नो चेद्घटादिभिः किमपराद्धं, ते तत्र किमिति न भासेरन् । इदं रजतमिति ज्ञानेन साकं रजतस्य घटाद्यपेक्षया सम्बन्धविशेषानाकलनात् । संविज्जनकत्वं हि विषयत्वम् । तच्च रजते विशेषसम्बन्धो न घटादाविति चेत् । नूनमिन्द्रियमपि संविदं जनयद्विषयतयैव वाञ्छसि किम् ।तस्मादतिव्यापकोऽयं सम्बन्धो न रजतभाननियामकः । परोक्षस्थले च किं कुर्याः । न हि तत्र विषयस्य जनकत्वम् । याऽनुमितिर्यन्निरूपितव्याप्त्याश्रयविषयकपरामर्शजन्या सा तद्विषयिकेत्याद्यननुगतमेव नियामकं वाच्यमिति चेत् । पक्षो न विषयः स्यात् । तद्विषयता नैव स्वीक्रियते इति चेत् । एवं तर्हि धूमहेतुकानुमितौ वह्निसंयोगालोकादीनामपि विषयतापत्तिः । धूमस्य तन्निरूपितव्याप्त्याश्रयत्वात् । याऽनुमितिः स्वहेतुभूतपरामर्शविषययन्निरूपितव्याप्तीत्यादिकृतेंऽशत आत्माश्रयः , कारणतावच्छेदककोटौ कार्यस्य निवेशादिति -- रजतस्यैव तत्र ज्ञाने भासमाने भाने किन्नाम नियामकं भवेदन्यतोऽभेदात् । रजतमहं जानामीति तु प्रत्ययत्रयं , न त्वेकोऽयं प्रत्ययो येन तद्बलेन ग्राह्यग्राहकभावस्तयोः समर्थ्येयः ।

यदि च स्थायित्वं भवेतदभ्युपगम्येतापि ज्ञानक्रियानिमित्तो विषयविषयिणोः सम्बन्धः । तत्तु न विचारसहम् । स्थिरं ह्युत्पद्यमानं समर्थं वाऽसमर्थं वा नश्वरं वाऽविनश्वरं वोत्पद्येत । न प्रथमः , समर्थस्य कालक्षेपायोगाद्युगपदेव सर्वं कर्त्तव्यं कुर्यादेव । समर्थस्वभास्य च

सहकार्यपेक्षावाचोयुक्तेरुपहासास्पदत्वात् । सहकारिभिरतिशयानाधाने तेषां वैयर्थ्यात् । अतिशयाधाने तु विरुद्धधर्माध्यासेन सातिशयस्य नूतनस्यैवोत्पत्तेः सिद्धः क्षणभङ्गः । असमर्थस्वभावं त्वपेक्ष्यापि न कुर्यात् । यदि नश्वरं तर्हि नाशस्वभावत्वादेव प्रतिक्षणं नश्येदिति मच्चरणशरणेन रक्षितोऽसि । चतुर्थे तु न कदापि नश्येद्गगनादिवत् । तस्मात् – " कुशूलस्थं वीजं यद्यङ्कुरसमर्थं स्यादङ्कुरं जनयेत् , न जनयति तस्मान्न समर्थम् " – इति प्रसङ्गविपर्ययाभ्यां ; एवं – " क्षेत्रपतितं यद्यसमर्थं भवेन्नाङ्कुरं भावयेत् , भावयति तु तस्मान्नासमर्थम् – " इति प्रसङ्गविपर्ययाभ्यां च ; कुशूलक्षेत्रस्थयोर्भेद इति क्षणिकत्वसिद्धिः ।

सति च क्षणिकत्वे जानातिक्रियानिमित्तो न विषयविषयिसम्बन्धो निरूपणार्हः । नो खलु क्षणिकस्य क्रियोत्पत्त्यतिरिक्ता सम्भविनी नाम । तस्मादन्यस्य सम्बन्धस्याशक्यनिरूपणत्वे स्वाभाविकोऽभेद एव सम्बन्धोऽभ्युपेयः । नो चेत् कथमपि रजतादेर्भानं न स्यात् । न हि तद्भानार्थं ज्ञानाभेदं विनाऽन्या गतिरस्ति । अतो रजतादेः प्रतिभानान्यथानुपपत्तिरेव तस्य संविदोऽभेदमाक्षिपति । यदाहुः –

अन्यथानुपपत्तिश्चेद्दिष्टा वस्तुप्रसाधिका ।
पिनष्टि दृष्टवैमत्यं सैव सर्ववलाधिका ॥
सेयमर्थापत्तिरस्मन्मतेऽनुमानमेव ।
सहोपलम्भनियमादभेदो नीलतद्धियोः ।

तदेतत्सङ्गृहीतं वृद्धैः –

स्वप्नधीसाम्यतो वुद्धेर्वुद्ध्याऽर्थस्य सहेक्षणात् ।
तद्भेदेनानिरूप्यत्वाज्ज्ञानाकारोऽर्थ इष्यताम् ॥

इति । जाग्रत्प्रत्यया निरालम्वनाः – स्वांशातिरिक्तालम्वनशून्याः प्रत्ययत्वात्स्वप्नप्रत्ययवत् । अर्थत्वेनाभिमतो वुद्धेरभिन्नः , नियमेन तया सहैवोपलभ्यमानत्वात् , यद्येन सह नियमेनोपलभ्यते तत्तेनाभिन्नं , यथैकेन चन्द्रमसा सह नियमेनोपलभ्यमानोऽपरश्चन्द्रस्तेनाभिन्नः ।

विमतं ज्ञानाभिन्नं ज्ञानभेदेनानिरूप्यत्वाज्ज्ञानवत् । वौद्धमते स्थित्वाऽप्युदाहरणोपनयातिरिक्तावयवप्रयोग एतन्मार्गक्षुण्णत्वहेतुक एव । ज्ञानभेदेनानिरूप्यत्वञ्च साध्यम् । तथाहि – ज्ञानभिन्नत्वे हि कोऽयं पटः । न तन्त्वतिरिक्तः । न हि तदतिरिक्ततया गौरिवाश्वातिरिक्ततया प्रतीयते । एवं तन्तवोऽपि नांश्वतिरिक्ततया प्रथन्ते । एवमंशवोऽपि स्वावयवातिरिक्ततया । तस्मात्पट इति तन्तव इत्यंशुरिति सर्वापि धीर्मृषैव । तदेवमापरमाणु सर्वेष्वपि पदार्थेषु निरूप्यमाणेषु याथात्म्यप्रतीतेर्न स्थविष्ठो न स्थूलो न क्षुद्रो न क्षोदिष्ठो वाऽस्ति पदार्थभेद इति सर्वा धियोऽवाह्यमपि स्वरूपं वहिष्ठेन विषयीकुर्वत्यो भ्रान्तिरूपतामेवालम्वन्ते । तदुक्तं –

वुद्ध्या विविच्यमानानां स्वभावो नावधार्यते ।
अतो निरभिलप्यास्ते निस्स्वभावाश्च देशिताः ॥

निस्स्वभावा इति ज्ञानातिरिक्तस्वभावशून्याः । वाह्यहेतुशून्यत्वेऽपि च स्वप्नादिष्विव वासनावैचित्र्यनिवन्धनमेव विज्ञानवैचित्र्यमुत्पत्स्यते ।

अपि च विज्ञानविषयतयाभिमतो वाह्यो न परमाणुः । स्थौल्यमवगाहमाना धीः कथमिव परमाणुमालम्वेत । यदि चेदं स्थौल्यं ज्ञानस्यैव धर्म्मः , तदा न विवदामहे । यदि ज्ञानकाले रूपपरमाणूनामेव निरन्तरमुत्पन्नानामेकज्ञानविषयतामापन्नानां स्थौल्यं धर्म्मः , परमाणूनां

प्रत्येकं सूक्ष्मत्वेऽपि सांवृतं स्थौल्यं प्रतीतिगोचरं – इत्युच्यते ; तदापि गन्धादिपरमाणुभिरन्तरितत्वात् नैरन्तर्य्यावभासस्य भ्रान्तित्वं न शक्यवारणम् । तस्मादवाह्यस्य परमाणुत्वे प्रत्यक्षप्रमाणगम्यता न शक्यसमर्थना – इति । यदि च वाह्योऽर्थोऽवगम्यते परमाणुसमूहस्तदापि परमाणुभ्योऽभेदे पूर्व्वाभिहितदोषान्निर्म्मोको न । भेदे च गवाश्वयोरिव तादात्म्यं न भवेत् । समवायस्य चानवस्थादोषग्रस्तत्वात् , स्वरूपेण सम्वद्धत्वस्य परिभाषामात्रत्वात् , न तमभ्युपगम्यावयवावयव्यादिभावकल्पनयापि निस्तारः । अवयविखण्डनयुक्तयश्चात्रोद्धोपणीयाः ।

अवयवी व्यासज्यावयवेषु वर्त्ततेऽव्यासज्यस्य वा । आद्ये यावदवयवप्रत्यक्षतां विना तत्प्रत्यक्षता न स्यात् । न हि घटद्वयप्रत्यक्षं विना तद्गतद्वित्वं व्यासज्यवृत्ति प्रत्यक्षं भवति । अव्यासज्य तत्तदवयवेषु वर्त्तने पुच्छेनापि स्तनकार्य्यं कुर्य्यादेव – इति रीत्याऽवयवी निरसनीयः ।

तस्माद्वाह्यस्य प्रपञ्चस्य ज्ञानानात्मकतया निरूपयितुमशक्यत्वात् , प्रमितत्वेनाभ्युपगमविषयस्यापि तस्य ज्ञानात्मकत्वे एव स्वीकरणीये भ्रान्तिविषयत्वेनाभ्युपेतानां ज्ञानात्मकतायां किं छिद्यते ।

वहिष्ठकल्पनाया गौरवपराहतत्वात् ।

रजतं संविद्रूपं , सम्प्रयोगमन्तरेणापरोक्षत्वात् , संविद्वत् – इत्यनुमापि रजतस्य ज्ञानात्मकतायां मानम् । अपि च , अयं घट इति ज्ञानानन्तरं स्मृतिर्जायते ज्ञानविषया – इति ज्ञानानुभवोऽपेक्षणीयः । निराकारस्य चास्मरणात् , अनुभवोऽपि साकारस्यैव । आकारश्चैकोऽनुभूयते , न तु द्वौ । एवञ्च स आकारो ज्ञानस्य वार्थस्य वेति विचारणायां ; ज्ञानस्यान्वयव्यतिरेकाभ्यां , वाह्यस्य स्वप्ने व्यभिचारात्, द्विचन्द्रादिवोधस्थले च चन्द्रे द्वित्ववाधात् , ज्ञानस्यैव तद्वाच्यम् । एवमेकव्यक्तावपि दारा इति वहुवचनप्रयोगो ज्ञानाकारतां विना न सेद्धुमर्हति ।

ननु यद्यस्त्येव रजतं ज्ञानाकारस्तर्हि नेदं रजतमिति सर्व्वानुभसिद्धस्य वाधस्य वाधकत्वमाशामोदकायते इति चेत् ।

मैवम् । इदं रजतमित्यत्र द्वयं प्रतीयते – स्वप्रकाशत्वाज्ज्ञानस्वरूपं , पुरोवर्त्तिद्रव्यञ्च । रजतत्वमपि तृतीयम् । तत्र नेदं रजतमिति वाधग्रहेण पुरोवर्त्तिनि रजतत्वे प्रतिषिद्धे सत्यर्थाज्ज्ञानस्यैव तत्परिशिष्यते । अन्यस्य तत्राविषयत्वात् । अत एवोच्यते – वाधग्रहस्य रजते इदन्तामात्रनिषेधेनैवोपपत्तौ रजतनिषेधस्यापि तद्विषयत्वे गौरवात् , रजतमान्तरमेवावतिष्ठते – इति । न हि वाह्यस्य ज्ञानातिरिक्तस्यासम्भवग्रासे सत्यन्यथाख्यात्यादिमतेनान्यदेशस्थस्यात्र प्रतीतिरिति कुकल्पनावकाशः । ज्ञानस्य च सर्व्वानुभवसिद्धत्वात् , तेनैवोपपत्तावसद्धानकल्पनमपि शशशृङ्गायितम् । तस्मात् , विज्ञानमेवानादौ संसारे तत्तदाकारेण वासनावैचित्र्यवशंवदीभूय प्रथते इति सिद्धमात्मख्यानमिति ।

इदन्त्ववधेयम् । यद्यपि सौत्रान्तिकवैभाषिकमतग्रन्था विशेषत उपलब्ध्यगोचराः , तथापि ताभ्यामप्यात्मख्यातिरेव स्वीक्रियते भ्रमस्थले , अन्यत्र तु वाह्यं जगत्स्वीक्रियते एव । तदुक्तं वाचस्पतिमिश्रैः – सौत्रान्तिकनये तावदस्ति वाह्यं वस्तु सत् . तत्र ज्ञानाकारस्यारोपः – इति । वैभाषिकमतेऽप्येतत्तुल्यम् –. इति कल्पतरुपरिमलादितः प्रतीयते । विशेषस्त्वियान् – अधिष्ठानं शुक्तिशकलादि सौत्रान्तिकनयेऽनुमेयं , वैभाषिकमते ति प्रत्यक्षम् । अध्यस्तं तु ज्ञानाभिन्नत्वात्प्रत्यक्षमेवोभयमते । नागेशेनापि मञ्जूषायां – सौत्रान्तिकनये ज्ञानधर्म्म एव भासतप – इत्युक्तम् । तस्यान्यथाख्यातिवादित्वं परमन्यत्रान्यारोपसाम्याज्जगाद – इत्यन्यदेतत् ।

अथ साकारख्यातिखण्डनम् ।

तदेतन्नानुभूतिपथमवतरति – इत्यपरे न क्षोदक्षमं मन्यन्ते ।

तथा हि – अत्रानुमानभङ्गस्सङ्गृहीतो 'वैधर्म्याच्च न स्वप्नादिवत्' – इति सूत्रार्थं विशदयद्भिर्मधुसूदनसरस्वतीभिः –

वाधेन सोपाधिकतानुमाने उपायभावेन सहोपलम्भः ।

सारूप्यतो वुद्धितदर्थभेदस्स्थूलार्थभङ्गे भवतोऽपि तुल्यः ॥

-इति ।

भवतु तावद्विज्ञानं स्वप्रकाशम । तच्चास्माभिर्नित्यं समर्थयिष्यते – इति विशेषः । इदमहं जानामि – इति धीस्तावज्जायते । सा चेदम्पदार्थस्य ग्राह्यत्वं विना नोपपद्यते । न खल्वनुभवोऽपि नोपपाद्यः । अवहेलनीयत्वापत्तेरुक्तत्वात् । न खलु भिन्नास्त्रयो विकल्पाः परस्परवार्त्तानभिज्ञास्सम्वद्धतयाऽवगन्तुं शक्याः । एकदैव 'अहमिदं जानामि' – इति विषयविषयित्वमवगमयन्जायते प्रत्ययः , न तु क्रमशः 'अहम्' – इति वा , 'इदम्' – इति वा , 'जानामि' – इति वा । तस्मात् , यथानुभवं विज्ञानाद्भिन्नमर्थक्रियायोग्यं वस्तु स्वीकर्त्तव्यम् । प्रत्यभिज्ञापि पदार्थानामैक्यं समर्पयन्ती कथं साहसमात्रेणान्यथयितव्या । नो खलु सादृश्यनिवन्धना सा । स्वतःप्रमाणानां धियां प्रमात्वस्य वाधकैकापोद्यत्वात् । न चात्र वाधकमुपलभामहे । न च समर्थासमर्थादिविकल्पो वाधकः । समर्थ एवोत्पद्यते – इति ब्रूमः । तादृशोऽपि च सहकारिणमासाद्यैव कार्य्यं जनयति । एतादृशमेव तस्य समर्थत्वं यत्सहकारिणमासाद्यैव कार्य्यजननं नाम । योग्यता तूत्पन्नमात्रस्यैव । सहकारिसहितात्तस्मादेव कार्य्योत्पत्तेर्दर्शनात् । केवलात्सहकारिणस्तस्मादेव वा केवलात्कार्य्यं भवतु – इति शङ्कानवकाशात् ।

जनकत्वाजनकत्वलक्षणविरुद्धधर्म्माध्यासादपि न वस्तुभेदः । न हि धर्म्मो धर्म्मिणोऽभिन्न एव येनैवं स्यात् ; अपि तु भिन्नाभिन्नः । न च – तयोर्विरुद्धत्वात्कथमित्थम् – इति वाच्यम् । विरुद्धम् – इति ह्यप्रामाणिके प्रत्ययः । इदन्तु प्रमाणसिद्धम् । सामानाधिकरण्यं हि सत्यपि भेदे घटपटयोः , सत्यपि चाभेदे एकत्र घटे नानुभूतचरं , भेदाभेदे एव पर्य्यवस्यति । तस्मात् , धर्म्मादयो धर्म्यादिभ्यो भिन्नाभिन्नाः , समानाधिकृतत्वात् , व्यतिरेके घटपटवत् , घटवच्च – इति प्रमाणसिद्धौ भेदाभेदौ । तथा च कथं धर्म्मभेदेऽपि धर्म्मिणा भेद आलम्वनीयः । सत्यपि भेदे तस्यैव धर्म्मो नान्यस्य – इत्यत्र वस्तुस्वभाव एव शरणीकरणीयः । नश्वरानश्वरत्वविकल्पेऽपि नश्वर एव जायते – इति वदामः । किन्तु नश्वरत्वं नाशयोग्यत्वम् । तच्च सति नाशकरणे फलमुपधत्ते ।

यत्राभिदधुर्वाचस्पतिमिश्राः – 'न हि तण्डुलाः पचेलिमा इति विनैव दहनसलिलसंयोगप्रचयभेदं विक्लिद्यन्ति , काष्ठानि वा भिदेलिमानि – इति कुठाराभिघातमन्तरेण दलन्ति' – इति । न च – तादृशप्रचयविशेषविशिष्टा एव तण्डुलाः पचेलिमा , न त्वन्ये – इति शङ्क्यम् । क्षणभङ्गभङ्गात् ।

न तु नाशस्वभावत्वं नश्वरत्वम् । तद्धि नाशस्वरूपत्वमेव । तथा च सति नाशस्यानाशे घटोऽपि न नश्येत् , तयोरैक्यात् । तथा च द्वितीयादिषु क्षणेष्वप्यनुवर्त्तेतैव घटः । नापि च नाशप्रतियोगिनोरैक्यं शङ्कास्पदतामर्हति । तस्मात्प्रत्यक्षवाधितमिदमनुमानम् ।

ब्रह्मज्ञानेतरवाधितत्वञ्चोपाधिः । स्वप्नादिप्रत्ययेषु तथा दर्शनात् । अदर्शनाच्च जाग्रत्प्रत्ययेषु । अपि च प्रत्ययहेतुविषयकज्ञानं त्वया प्रतिपाद्ये वादिनि जनयितव्यम् । तज्ज्ञानं सालम्वनं वा , निरालम्वनं वा ।

आद्ये वाधः । चरमे स्वरूपासिद्धिः । ज्ञानात्मकं प्रत्ययत्वमस्ति – इति चेत् । कथमेतद्भवताऽहं प्रतिपाद्य एतयैवानुमित्या – इति तु नार्हति वक्तुम् । अन्योन्याश्रयापत्तेः । सति हेतुज्ञान एषानुमितिः । सत्याञ्च तस्यां हेतुज्ञानम् । तस्माद् , यत्किञ्चिदेतत् ।

स्वामी शङ्करचैतन्यभारती

सहोपलम्भनियमोऽप्यन्यथासिद्धः । स एव हि हेतुस्साध्यं साधयितुं क्षमो , यस्तं विना न निर्वहेत् । अयं तूपायभावमादायाप्युपपत्स्यते । यथा हि प्रभा रूपग्रहे उपायतामश्नुवत्यपि न रूपात्मिका , तथा ज्ञाने उपायभूतो विषयो ज्ञानग्रहविषयोऽपि न ज्ञानम् – इति स्यात् । विषयस्य ज्ञानोपायत्वन्तु विषयोपरागेणैव ज्ञानग्रहस्य जायमानत्वम् ।

अथवा – मिथ्याभूतो यो विषयतारूपस्सम्बन्धः , स एवोपायो ज्ञानग्रहस्य स्वविषयविषयकत्वनियामकः । तस्य विषयेषु विद्यमानत्वेन सहोपलम्भ उपपाद्यतां , न तु तस्यैक्यसाधकत्वम् । यदि च लाघवमेव परमीक्ष्यते ज्ञानाज्ञानातिरिक्तत्वाभावे विषयस्य , तदपि न साधीयः । स्थूलार्थभङ्गेऽर्थसारूप्यमेव ज्ञानानां प्रामाण्यमिति वदतः सौत्रान्तिकस्य यथा ज्ञानार्थयोरत्यन्तभेदः , तथा योगाचारेणापि स उपगन्तव्य एव । न हि सारूप्यमभेदे सम्भवि नाम । त्वयापि च ज्ञानविषययोस्तादात्म्यमभ्युपगतमेव । किन्त्वभेदे तादात्म्यं नोपपद्यते – इत्यस्य निवेदितत्वात् , सारूप्यमङ्गीकार्य्यमेव । कल्पितभेदस्वीकारे च तादात्म्यमपि तादृशमभ्युपगम्यताम् ।

यदि चाधुनापि लाघवं परमाद्रियसे , तर्हि ज्ञानोत्पत्तिनाशकल्पने गौरवात्किमिति न बिभेषि । तस्मात् , एकं नित्यं स्वप्रकाशं ज्ञानमभ्युपगम्य तत्र कल्पितमनिर्वाच्यं प्रपञ्चं स्वीकुरु । स चावयवावयव्यादिरूपेण यथातथाऽस्तु , नास्यां काकदन्तपरीक्षायामस्माभिर्निर्बन्धो विधेयः । सर्व्वथापि तु तस्यानिर्व्वाच्यत्वमेव । अनुभवोऽपि चैवमनुरोत्स्यत एव । सर्व्वथा प्रपञ्चस्य ज्ञानातिरिक्तत्वेनानुभूतिगोचरस्यानपलापात् ।

सम्प्रयोगमन्तरेणापरोक्षत्वन्तु नैयायिकैरलौकिकसन्निकर्षस्वीकारात्स्वरूपासिद्धम् , असंविदाकारे बाह्यत्वे व्यभिचारि च । द्विचन्द्रादिभ्रमस्थले च द्वितीयचन्द्रोत्पत्तेरग्रे उपपादनीयत्वात् , न ज्ञानाकारता । दारा इत्यादि बहुवचनन्तु तथैव साधुत्वानुशासनात् , वस्त्वैक्येऽप्यवयवादिगतबहुत्वस्यावयविन्युपचाराद्वा शक्यसमर्थनम् – इति न साकारवादसहकारि । एवञ्च नेदं रजतम् – इति प्रत्ययो रजतमेव निषेधति , न तु रजत इदन्त्वम् । तथा हि राति रजते ज्ञानात्मकत्वं त्वयोपपाद्यम् । तच्च पूर्व्वाभिहितयुक्तिभिर्बाधितम् । यदि च कदाचिदपि रजतस्य ज्ञानात्मत्वमनुभवपथमवतरेत् , तदा पारिशेष्यादपीदमि रजतात्मतां प्रतिषेध्य ज्ञाने रजतात्मताऽध्यवसीयेत । न त्वेवं कदाचिदपि 'अहं रजतम्' – इति प्रतीतिर्जायते । तस्मात् , प्रमाणाभावात् , न ज्ञानाकारता भ्रमगोचरस्य – इति सिद्धम् ।

**असत्संसर्गख्यात्युपपादनम् ।**

द्वितीयविप्रतिपत्तिस्त्वसत्तादात्म्यविषयतामभ्युपेत्य प्रवृत्ता । तत्र निषेधकोटिः खण्डिता । विधिकोटिः प्रथममित्थमुपपाद्या । तथा हि – 'पुरोवर्त्तिनं रजततया प्रत्येमि' – इत्यनुभवः पुरोवर्त्तिरजतयोस्तादात्म्यप्रतीतौ मानम् । तादात्म्यञ्च तदसत् । न हि पुरोवर्त्तिशुक्ते रजतेन सह तादात्म्यमस्ति । तस्मात् , असदेव भासते । केवलस्यासतो मा नामास्तु भानम् । सदुपरक्तस्य तु तन्न दण्डवारितम् । सतो हीदृशो महिमा यदसदपि स्वोपरक्ततया भासयति । केवलस्यासतो हि भवद्भानमिन्द्रियैर्वा भवेदनुमानादिना वा : न तावत्प्रथमः कल्पः । विषयसन्निकृष्टतयैव ज्ञानं जनयितुमीशते इन्द्रियाणि । न चासता सन्निकर्षस्सम्भाव्योऽपि । उपस्थितस्यैवार्थस्य च संसर्गो लिङ्गादिभिर्बोधनीयः । नो चेदतिप्रसङ्गं को वारयितुं क्षमेत । व्याप्तिशक्तयोर्ग्रहश्च नासति सम्भवति । असम्भवंश्च कथमुपस्थितिं जनयेत । अजाता चोपस्थितिः कथमनुमितावुपयुज्येत । तस्मात् , केवलमसन्न भासते ।

वासनैव भासयतु – इति चेत् । सा निरपेक्षा न समर्था भासने । सापेक्षत्वे तु सोऽपेक्ष्यो बाह्य एव – इति । एषैव च **वाचस्पतिमिश्रसम्मताऽन्यथाख्यातिः** । अभ्युपजग्मुश्चैनां **कुमारिलभट्टा** अपि , यजगदे तैरेव –

तस्माद्यदन्यथा सन्तमन्यथा प्रतिपद्यते ।

स्वामी शङ्करचैतन्यभारती

तन्निरालम्वनं ज्ञानमभावालम्वनञ्च तत् ॥ (निराल वा ११७ श्लो) .

यस्मादेवं वाह्यं समर्थितं , तस्माच्छुक्तित्वेन सन्तं रजतात्मना ग्रहणादेव विज्ञानस्य निरालम्वनत्वं ; न त्वात्मविषयकत्वेन । अभावेत्यस्यासदित्यर्थः । अत एव क्वचित्तथैव पाठः । अत्र ख्यातावनुमानं प्रमाणमग्रे स्फुटीभविष्यति । जैनैरप्येषैव ख्यातिस्स्वीक्रियते – इति ज्ञेयम् । उक्तञ्चैतत्स्याद्वादमञ्जरीटिप्पणे – इति ।

इदमत्र वोध्यम् । **'सदसत्ख्यातिर्वाधावाधात्'** – इति साङ्ख्यसूत्रानुसारिभिर्विज्ञानभिक्ष्वादिभिस्सदसत्ख्यातिशब्देन व्यवह्रियमाणाप्यसत्संसर्गख्यातिरेव । यतस्तैरेवागादि – **'स्वरूपेणावाधस्सर्व्ववस्तूनां नित्यत्वात् , संसर्गतस्तु वो(वा - शुद्धपाठः)ध'- इति** । न च सत्संसर्गस्य वाधः । तस्मात् , असन्नेव सः । एवं **'रजतं वणिग्वीथीस्थरूपेण सत् , शुक्ता(व? / त्य - शुद्धपाठः)घ्यस्तरूपेण चासत्'** – इत्यप्युक्तम् । **तन्नये**ऽभावस्याधिकरणात्मतया रजतासत्त्वं शुक्तिनिष्ठं शुक्त्यात्मकम् – इति रजतमसदेव शुक्त्यात्मना वर्त्तते – इति पर्य्यवस्यति ।

भट्टपादानामपीयं कथा । तैः

'भावान्तरमभावोऽन्यो न कश्चिदनिरूपणात् ।

स्वरूपपररूपाभ्यां सर्व्वं सदसदात्मकम् ॥'

- इति स्वीकारात् । अधिकरणेन चाभावस्य तादात्म्यमेव संसर्गो भेदाभेदरूपम् । अत एवात्यन्ताभेदोपगन्तुः प्रभाकरात्तन्मतभिदा । अत एव – 'ननु भावादभिन्नत्वात् सम्प्रयोगोऽस्ति , तेन चेति श्लोकार्धेनेन्द्रियेणैवाभावग्रहणसम्भवादनुपलब्धेः पृथक्प्रमाणत्वमाक्षिप्य , 'न ह्यत्यन्तमभेदोऽस्ति रूपादिवदिहापि न । धर्म्मयोर्भेद इष्टो हि धर्म्म्यभेदेऽपि नस्स्थिते ॥' – इत्यनेन श्लोकवार्त्तिके तादात्म्यमुपापीपदन् । अत एव च कुसुमाञ्जलौ वर्द्धमानेन – 'भट्टानामधिकरणे विशेषणत्वं नाभावस्य , किन्तु तादात्म्यम्'- इत्यभ्यधायि । तस्माच्छुक्त्यात्मना रजतमसद्वर्त्तत एव । जैनैरपि परद्रव्यक्षेत्रकालस्वभावैर्वस्तुनोऽसत्त्वोपगमात् , वस्त्वनेकान्तवादस्य च भट्टैरपि 'इहानैकान्तिकं वस्त्वित्येवं ज्ञानं सुनिश्चितम्' – इत्यभिदधद्भिर्वन(?)वादे स्वीकारात् , 'भावाभावात्मकत्वाद्वस्तुनो निर्विषयो ह्यभाव' – इति जैनैरपि कथनाच्च , एतादृशविषयेषु प्रायो जैनभट्टपादसाम्यमेव । तस्माज्जैनानामप्येषैव ख्यातिः – इति मन्महे ।

किन्तु , 'रजतमसच्छुक्त्यात्मकम्' – इति नैयायिकैर्नाभ्युपेतं , तैरभावस्याधिकरणात्मताऽनङ्गीकारात् - इत्याशयेन **'नान्यथाख्यातिः , स्ववचोव्याघातात्'** – इति साङ्ख्यसूत्रेणान्यथाख्यातिरखण्डि । असतो भानमसम्भवि – इति स्ववचो व्याहन्यते , तत्रासतो रजतस्य भानाभ्युपगमे -- इति तत्सूत्राशयः । **भट्टादिनये** तत्रासतोऽपि रजतस्य श(शु - शुद्धपाठः)क्त्यात्मना वर्त्तमानत्वात् , नैतत्खण्डनविषयता – इति , हट्टस्थरजतस्य शुक्तिसंसृष्टतयाऽवृत्तेस्तु संसर्गासत्त्वम् – इति ध्येयम् । एवं सूक्ष्मनिरीक्षणे मतैक्यपर्य्यवसानेऽप्यापाततो भेदप्रसिद्धिस्त्वेतेनाशयेन वोध्या - हट्टस्थरजतमत्र भासते – इति वाचोभङ्ग्या संसर्गासत्त्वादसत्ख्यातिव्यपदेशः , शुक्तावसद्रजतं श(शु)क्त्यात्मना सदेव भासते – इति वाचोभङ्ग्या च सदसत्ख्यातिव्यपदेशः ।

इयं समीक्षा विज्ञानभिक्षुभाष्यानुसारेण । किन्तु मञ्जूषायां 'सदसत्ख्यातिर्वाधावाधाभ्याम्' – इति सूत्रस्य नागेशकृतव्याख्यानस्य 'यावद्विशेषदर्शनमवाधः , तदुत्तरञ्च वाधः , अधिष्ठानगतसत्त्वारोपेण तु यावद्विशेषदर्शनं वहिस्सत्त्वेन प्रतीतिर्वुद्धिस्थरजतस्य' – इत्यस्यावलोकनेन कुमारिलभट्टपादमतादत्यन्तविलक्षणैव सदसत्ख्यातिस्सम्मता – इति प्रतीयते – इति वोध्यम् । तत्र च विप्रतिपत्तिः प्राङ्गिरूपितैव ।

स्वामी शङ्करचैतन्यभारती

अथासत्संसर्गख्यातिनिरासः ।

तत्र शुक्तिरपि सती , रजतमपि हट्टे सत् , अत्र पुरोवर्त्तिनि च तद्रजतं भासते – इत्ययमंशोऽग्रे निरूप्यमाणायामन्यथाख्यातावपि तुल्यः । स चाग्रे भूषयिष्यते दूषयिष्यते च विस्तरशः । असत्संसर्गभानं परमत्र विशिष्टम् । तच्च स्वयमेव दूषितं तैः । न हि - केवलमसद्भासितुं न क्षमते , सदुपरक्तन्तु भासते – इति शक्यसमर्थनम् । असच्चापरोक्षानुभवविषयश्च – इति व्याहतम् । नो खल्वसन्संसर्गस्सत्तादम्यङ्ग(दात्म्यङ्ग)त – इति वदितुं क्षमसे । सदसतोस्तादात्म्यानुपपत्तेः , उपरागानुपपत्तेश्च । असंश्च क्वचित्सम्बद्धश्च – इति व्याहतम् । यदि च वौद्धैस्सन्धिं विधायासतोप्यपरोक्षानुभवं समर्थयसे , तर्हि सर्व्वांशे एवासत्ख्यातिमभ्युपगत्यापि स समर्थनीय इति व्यर्थोऽयं तत्र स्याद्वौद्धैर्विवादः । अयुक्तमिति मत्त्वा चेदमवहेलितं नव्यनैयायिकैः । यत्र च गृह एव विवादस्तत्रापरैः किमु वाच्यम् – इति किं मृतस्य मारणेन – इति । तदुक्तं तर्कचणैः – 'सन्मात्रविषय एव भ्रमः । रजतपुरोवर्त्तिनोस्सत्त्वात् । न च संसर्गोऽसन् । तदुभयातिरिक्तस्य प्रमाणानारोहात् । संसर्गारोपस्थलेऽप्येवमेव । भ्रमत्वञ्च तदभाववति तत्प्रकारकत्वात्' – इति । एतेन – 'पुरोवर्त्तिनं रजततया प्रत्येमि' – इत्यनुभवोऽपि सत्संसर्गविषयकत्वेनैवोपपादितः – इति ।

अथ सर्व्वासत्ख्यातिनिरूपणम् ।

असत्त्वं ज्ञानविषयतासमनियतं न वा – इति विप्रतिपत्तिरधुना निरास्या ।

तत्र पूर्व्वः पक्षः –

शुक्त्यतिरिक्तो देशो रजतत्वात्यन्ताभाववान् , देशत्वात् , शुक्तिवत् – इत्यनुमानमसद्भाने मानम् ।

न च – शुक्त्यतिरिक्ते देशे घटादौ रजतत्वाभावस्वीकारात्सिद्धसाधनम् । पक्षतावच्छेदकावच्छेदेनानुमितिसत्त्वात् ।

शुक्त्यतिरिक्तरजते साध्यासत्त्वाद्बाधस्तु नोद्भाव्यः । तत्र रजतप्रतीतेः प्रमात्व एवास्माकं विप्रतिपत्तेः ।

अथ रजतत्वेनैव पक्षतास्तु ।

न च – अनुमितेराहार्य्यत्वापत्तिः , अत एवाकिञ्चित्करत्वापत्तिः , घटवत्तां स्वीकृत्य तत्रैव घटाभावमवगाहमानायाः प्रतीतेरिव – इति वाच्यम् ।

रजतत्वेन पराभिमतम् – इति रीत्या प्रयोगेऽदोषात् – इति चेत् ।

ननु रजतसामग्र्यप्रसूतत्वमुपाधिः । शुक्त्यादौ सत्त्वेन साध्यव्यापकत्वं , रजतेऽसत्त्वेन च साधनाव्यापकत्वम् । - इति चेत् ।

न । पक्षमात्रव्यावर्त्तकत्वात् ।

अपि चोपाध्यभावेन साध्याभावे साध्यमाने व्यतिरेकव्याप्तावुपाधिः । तथा हि – 'रजतत्वेनाभिमतं रजतत्ववत् , रजतसामग्रीप्रसूतत्वात् , व्यतिरेके घटवत्' – इत्यत्र व्यतिरेकव्याप्त्या 'रजतत्वेन पराभिमतं रजतसामग्रीप्रसूतं न भवितुमर्हति , रजतत्वाभावात् , घटवत्' – इत्यनुमितौ रजतसामग्रीनिष्ठप्रागभावाप्रतियोगित्वस्य सन्दिह्यमानस्योपाधित्वात् , साध्यव्यापकत्वं निश्चितं , सेनाव्यापकत्वं सन्दिग्धम् । एवं 'रजतत्वं समवायेन रजतवृत्ति न , जातित्वात् , घटत्ववत्' – इत्यपि साधु । अत्रापि रजतसामग्र्यप्रसूतवृत्तित्वमुपाधिः पूर्व्वाभिहितदिशा निरास्यः ।

शुक्तौ च रजतत्वं न केनापि स्वीकृतम् । यदि कश्चिदभ्युपजगाम , सोऽनुभवाननुसरणादवहेलनीयः । न हि शुक्त्यापि तादृशं कटकादि निर्म्मातुं पार्य्यते , यादृशं रजतात् – इति ।

स्वामी शङ्करचैतन्यभारती

एतेन – 'शुक्ती रजतात्मना परिणमते' – इति केषाञ्चिदुद्धोषोऽपि – प्रतारणायितः ।

पुरोवर्त्तिनि रजते वा "'इदं रजतम्' – इति ज्ञानं भ्रान्तिः'" – इति न वक्तुं सुशकं , वर्त्तमानत्वात्तयोः ।

तयोस्संसर्गांशे स्याद्भ्रान्तिः , तस्यासत्त्वात् । तथा च , असत्ख्यातिर्दत्तपदा सर्व्वांसत्त्वसाधनेनैव विश्राम्यति । यदाहुः –

प्रसरं न लभन्ते हि यावत्क्वचन मर्कटाः ।

नाभिद्रवन्ति तावद्धि पिशाचा वा स्वगोचरे ॥

एकत्रासत एवापरोक्षभानस्य क्लृप्तत्वेऽपरत्राऽपि तदेवापरोक्षमवभासिष्यते - इति , व्यर्थोऽयं प्रपञ्चाभ्युपगम – इति , शून्यतैव भगवती परमार्थसती विजयते ।

यदि 'धर्म्मधर्म्मिभावमनापन्ना एवेदंरजतसंसर्गास्त्रयोऽवभासन्ते , ते चास्मन्नये सन्त एव' – इति भणसि ; तर्हि समूहालम्बनादस्य कियन्तं विशेषमाकलयसि , येनैकस्य प्रमात्वेऽपरस्य च भ्रमत्वे आदरः ।

तथा च , विषयस्य सत्त्वे वाधग्रह एव नोदीयात् । उदेति च वाधग्रहः । तस्माच्च पूर्वग्रहस्य भ्रान्तित्वकल्पना । सति च भ्रान्तित्वे तदन्यथानुपपत्त्याऽसद्विषयकत्वं स्वीकार्य्यम् । सद्विषयकश्च भ्रमश्च – इत्यस्य विरुद्धत्वात् ।

'असदेव रजतमभात्' – इत्यनुभवोऽप्यसत्ख्यातौ मानम् ।

तदेवं प्रत्यक्षानुमानार्थापत्तयस्तत्र मानानि – इति सिद्धम् ।

तथापि कथमत्र मनःप्रत्ययमादधीमहि , असतोऽपरोक्षतानर्हत्वात् । नो चेत् कथन्नातीतानागतयोरपरोक्षावभासः । स्याच्चेत्थं सर्व्वसर्व्वज्ञता । अन्यत्र वर्त्तमानस्यापि पुरोवर्त्तिन्यसत्त्वात् । अतीतानागतानामपि चासत्त्वात् । असतश्चापरोक्षत्वस्वीकारात् । सर्व्वज्ञतासम्पत्त्यर्थं तवागमेषु च साधनोपदेशा अपि वैयर्थ्यं कथं नाश्नुवीरन् । तस्मात् , त्याज्योऽयमसत्प्रकाशनसमर्थनाग्रह – इति चेत् ।

मैवं वोचः । न खलु ममैव पुरत इयं चेतोव्यथाभिनेया । सर्व्वैरेव त्वसत एव भानमभ्युपेतव्यम् – इति ब्रूमः ।

अन्यथाख्यातिवादिनां ह्यन्यत्र देशेऽस्तु नाम रजतम् , अत्र तु तदसदेव । अन्यत्र सत्तामात्रेण च विशेषं वदता कालिकातास्थभोजनेन तृप्तिमभिलष्यन्वाराणसेयोऽन्वहारि । न ह्यन्यत्र सदप्यत्र कमपि विशेषमाधत्ते ।

अपरोक्षतयावभासनाच्च नैषा स्मृतिरपि , येन संस्कार एव विशेष आधेय इति भणितुं शक्येत । अत्रैव रजतं सत् – इति ब्रुवाणस्तु रजतार्थिनं शुक्तिकाशकलैरेव किमिति न कृतार्थीकुर्य्यात् ।

आत्मख्यातिवादिनापि वहिरसत एव भानस्वीकृतेरसतो भानमशक्यव्युदासम् ।

अत्रोत्पन्नं नूतनं रजतम् – इति व्याहरंस्तूपहास्य एव संख्यावद्भिः ।

तस्मात् , असत एव प्रतिभास – इत्यकामेनाप्यालम्बनीयम् ।

अपि च , मन्नये व्यवहारेऽपि विश्वमिदं विश्वं गगनकुसुमायते एव । परमार्थतस्त्वलीकत्वं वदामः । न हि - मया सांवृतं सत्त्वमपि पदार्थानां नेष्यते , नापि च विज्ञानं नास्थीयते । क्षणिकत्वभावनानिवर्त्त्यस्स्थैर्यमेव शून्यताभावनया निवर्त्त्याऽवाध्यतापि व्यावहारिकी मयाभ्युपगतैव । यदाह(हुः) –

फेनपिण्डोपमं रूपं वेदना वुद्बुदोपमा ।

मरीचिसदृशी सञ्ज्ञा संस्काराः कदलीनिभाः ॥

मायोपमञ्च विज्ञानमुक्तमादित्यवन्धुना ।

- इति ।

शून्यतायाः परमार्थतामेव परं समर्थयामहे ।

विज्ञानमपि चानिर्व्वाच्यमभिदधता मया विज्ञानवादिमतप्रवेशोऽपि न व्यधायि । न हि विज्ञानस्याप्यनिर्व्वाच्यतां स मेने , येन मतैक्यं शङ्कास्पदमपि भवेत् ।

ननु वाह्यस्य प्रपञ्चस्यानिर्व्वाच्यत्वाविशेषे विज्ञानस्य सत्त्वं स्वीकृत्य योगाचारेण सहैकमत्यमेव किन्नालम्बसे – इति चेत् ।

न । विषयस्यानिर्व्वाच्यत्वसिद्धौ निर्व्विषयकज्ञानासम्भवाज्ज्ञानस्य विषयसमानयोगक्षेमत्वात् ।

न खल्वनिर्व्वाच्यमपि नित्यं येन तस्यैव सर्व्वदावस्थानात् ज्ञानधारायास्तद्विषयकत्वमेव – इति शक्यवचनं स्यात् । तस्मात् , ज्ञानमप्यनिर्व्वाच्यमेव ।

अत एव ,

तत्रार्थशून्यं विज्ञानं योगाचारास्समाश्रिताः ।

तस्याप्यभावमिच्छन्ति ये माध्यमिकवादिनः ॥

- इत्यत्र परमार्थतोऽभावम् – इत्येवार्थः । न तु – सांवृतं सत्त्वमपि नेच्छन्ति - इत्यर्थः ।

सति चैवम् , अरादेव विज्ञानं परमार्थतस्समनन्तरप्रत्ययासादितसामर्थ्यातिशयमसन्तमपि सन्तमिव प्रकाशयति । अतिशयश्च तस्य विषयजन्यज्ञानापेक्षया विषयाजन्यत्वमेव । एवञ्च सति सर्व्वसर्व्वज्ञत्वापत्तिरपि न दानार्हा । कथमसतस्समनन्तरप्रत्ययस्य सामर्थ्याधायकत्वं , कथञ्चासतस्सामर्थ्याश्रयत्वम् – इति विकल्पकल्पना त्वविचै(च)यैवोत्सारणीया संवृत्त्याख्यया । तदेतदेव पदार्थानां संवृत्तिसत्त्वं ब्रूमहे । सिद्धे चैवं भ्रमस्थलेऽसद्धानेऽन्यत्राप्यसत्त्वमनुमिमीमहे । यथाहुः –

न सन्नासन्न सदसन्न चानुभयतत्त्वकम् ।

विमतं तर्कपीड्यत्वान्मरीचिषु यथोदकम् ॥

न सत् , वाध्यत्वात् । अस्य जगतोऽनुभूयते हि वाधो योगजप्रत्यक्षे शून्यत्वभावनाजननीके । यौक्तिकवाधश्च सङ्क्षेपतोऽभाणि विज्ञानवादप्रस्तावे ।

नासत् , कालसम्वन्धात् । न हि गगनकुसुममपि कालेन सम्वद्धम् । तथा सति जायेत , नश्येच्च ।

न सदसत् , विरोधात् ।

सद्भिन्नतयाऽसद्भिन्नतया च तात्त्विकत्वेन निर्व्वचनासम्भवात् , सदसद्भिन्नमपि न ।

तस्मात् , सत्यत्वेन लोके प्रतीतिसिद्धस्य सत्त्वं भवतसांवृत्तिकमेव भवेत् । असत्त्वं तु तर्कपीड्यत्वेन ब्रूमः ।

तदभ्यधायि –

चतुष्कोटिविनिर्मुक्तं तत्त्वं माध्यमिका जगुः ।

- इति ।

द्वे सत्त्वे समुपाश्रित्य वुद्धानां धर्म्मदेशना ।

- इति च ।

तस्मात् , सकलकलाकलितमदोऽसदेव सचेतनं जगत् – इति रम्यम् ।

अथ सर्व्वासत्ख्यातिनिरासः ।



तदेतस्य सर्व्वभङ्गस्य भङ्गमसूसुचद्भगवान्वादरायणो – 'नाभाव उपलब्धेः' – इति सूत्रेण ।

अधिष्ठानस्य नाभावः , उपलब्धेः – प्रमाणात्प्रमितेः ।

'कश्चिद्धि परमार्थमालम्ब्यापरमार्थो(र्थाः) प्रतिषिध्यन्ते । यथा रज्ज्वादिषु सर्पादयः' - इति च वभाषे भाष्यकृद्भिरपि ।

निरवधिकस्य वाधस्यासम्भवात् , किञ्चिदधिष्ठानं चेतनमवश्याभ्युपगमनम् । साक्षिणोऽपि वाधे , तस्यान्य एव वाच्यस्साक्षी ; तस्याप्यन्य – इति भवेदनवस्था । निस्साक्षिके च वाधे प्रमाणप्रश्ने किमुत्तरम् । को व्रूते 'सोऽस्ति' – इति । नास्त्येव – इति किं न स्यात् । प्रमाणं विना च स्वीकारे , किं नाम यन्न स्वीकार्य्यत्वेनापाद्यं स्यात् ।

अन्वमानि चेदं धर्म्मकीर्त्तिनाऽपि –

अप्रत्यक्षोपलम्भनस्य नार्थदृष्टिः प्रसिध्यति ।

- इति भणता ।

किन्तु साक्षिणोऽपि क्षणिकत्वे नोक्तवाधया मुच्यामहे इति , तस्य नित्यत्वमेवातिष्ठामहे ।

तदूच आचार्य्यैः –

वाधितोऽपह्नवो मानैर्व्यावहारिकमानता ।

मानानां तात्त्विकं किञ्चिद्वस्तु नाश्रित्य दुर्भणा ॥

- इति ।

सर्व्वथा प्रपञ्चस्यापलापस्तु नाधिगन्तुं शक्यः । तस्य प्रत्यक्षादिप्रमाणगोचरत्वात् । अनिर्व्वाच्यत्वात्तु तस्य तद्विषयकप्रमाणानां व्यावहारिकमानताऽभ्युपगमनीया । सा च साक्षिणं स्वप्रकाशं नित्यं विना न निर्व्वोढुमीष्टे – इति सोऽभ्युपेयते – इति ।

न च - विषयस्य मिथ्यात्वे , निर्व्विषयकज्ञानासम्भवात् , ज्ञानस्यापि मिथ्यात्वम् - इति वाच्यम् । ज्ञानस्य सविषयकत्वनियमस्य प्रमाणशून्यत्वात् । ऐन्द्रियकज्ञान एवोक्तनियमस्य सर्व्वैस्स्वीकर्त्तव्यत्वात् । अन्यथा , यत्र ज्ञानं तत्र विषय – इति दैशिकव्याप्तेस्स्वप्नेऽप्यसम्भावितत्वात् , कालिक्याश्च व्यभिचारात् – इति । तस्मात् , मिथ्याभूतस्य कदाचिदपि मोक्षादौ सर्व्वथाऽत्यन्ताभावसत्त्वेऽपि निर्व्विषयस्य व्रह्मरूपज्ञानस्यावस्थानमभ्युपेयम् ।

तदेवमयमसत्त्ववादोऽन्तिके वेदान्तस्य , प्रपञ्चासत्त्वस्वीकारात् । असत्पदस्थानेऽनिर्व्वाच्यपदाभिषेकः परमतिरिच्यते । अधिष्ठानत्वेनाभिमते सद्वस्तुनि त्रैकालिकनिषेधप्रतियोगित्वं हि मिथ्यात्वमालम्बिर औपनिषदाः । निरधिष्ठानस्य तादृशनिषेधस्य प्रतियोगित्वमनुमेनिरे माध्यमिकाः , ज्ञानज्ञेययोरुभयोरप्यनिर्व्वाच्यत्वस्वीकारात् – इति ।

नेदिष्ठश्च विज्ञानवादस्ततोऽपि वेदान्तस्य , स्वप्रकाशविज्ञानस्वीकारात् । अनिर्व्वाच्यतांशेऽप्यस्ति कियानपि विशेषः । यदगादि परिमलकारैः –

"न हि विज्ञानवादिनाऽस्माभिरिव 'जगदनिर्व्वचनीयम्' – इत्युच्यते , येन तस्येत्थं विचारासहत्वं भूषणं भवेत् ; किन्तु वाह्यास्तित्ववादिभिर्यावद् 'वहिरस्ति' – इत्युच्यते , 'तत्सर्व्वमन्तस्सत्यमेवास्ति' – इति कथ्यते" ।

अयमभिसन्धिः – वेदान्तिभिस्सत्त्वेनासत्त्वेन सदसत्त्वेन चानिर्व्वाच्यत्वं स्वीकृतम् । योगाचारेण तु निर्व्वाच्यसद्विज्ञानरूपेण निर्व्वाच्यत्वमेवाभ्युपगतम् । माध्यमिकेन तु न तादृशविज्ञानात्मतयाऽपि निर्व्वाच्यत्वमुपेतम् ।

तर्हि महतो विशेषस्य सत्त्वात् , माध्यमिकापेक्षया नेदिष्ठत्वोक्तिः कथम् – इति चेत् । सतो विज्ञानस्य स्वप्रकाशस्याभ्युपगममात्रेण – इति गृहाण ।

तस्मात् , अलीकविषयकत्वमेव भ्रान्तीनां व्यासेधामो , न त्वनिर्व्वाच्यविषयकत्वमपि । अनिर्व्वाच्यमपि चोत्पद्यत एव – इत्युपरिष्टान्निवेदयिष्यते ।

तस्मात् , भ्रान्तेस्सद्योजातानिर्व्वाच्यविषयतया सति जीवने न तदन्यथानुपपत्तिरसत्ख्यातौ मानम् । अत्रावर्त्तमानस्य कदाप्यपरोक्षतया भानासम्भवात् । अनुभवस्त्वनिर्व्वाच्यत्वस्यैकदेशं सद्विलक्षणत्वमेवावगाहते 'रजतमसदेवभात्' – इत्याकारकः । शशशृङ्गवदलीकत्वपरत्वे तदपरोक्षासम्भवात् । असच्छब्दस्यानिर्व्वाच्यपरत्वे लिप्टापत्तिः । तदत्र नास्माकं कोऽपि व्ययो भवति , अविद्यैव यदि भगवती प्राणान्धारयन्त्यनिर्व्वाच्यं प्रसुवीत । अनुभवो हि(वोऽहि ?) तथा सति 'अहं रजतं पश्यामि' – इत्युपपद्येत परम् । अत एव च गौरवविभीषिकापि न समुन्मिषति । रजतादिपक्षकमनुमानं तु वेदान्तिनामिष्टं , ब्रह्मसत्त्वावाधनात् । तद्बाधासम्भवश्च निवेदितः ।

तस्माद् , भ्रमे सदसद्विलक्षणं प्रथतां , न त्वसदेव । अधिष्ठानन्तु चेतनं सर्व्वत्र सदेव प्रतीयते । तस्मात् , केवलस्यासतः प्रथा – इति न युक्तम् ।

यच्चा(यच्चात्र - शुद्धपाठः) स्वकपोलकल्पितं विकल्प्य विकलयामासुरसद्वादिनं , तदस्मभ्यं न रोचते । शिष्यबुद्धिवैशद्यार्थं परमुपनिवद्धा ग्रन्थप्रणेतृभिस्ते विकल्पाः । यत ईदृशी हि विचारसरणिर्यत्सम्भावनामात्रेणापि विकल्पाः कल्प्यन्ते एव परैरकल्पिता अपि ।

अमी चेमे – 'अविद्यया यदि विज्ञानेऽसत्प्रकाशनशक्तिरभ्युपेयते , किममुष्याश्शक्यम् । अशक्यैव तु सा न भणनीया । तादृश्या अपि शक्तित्वस्य पारिभाषिकत्वात् । शक्यञ्च भवदसदेव भवेत् , सतोऽनुपंगमात् । तदपि किं कार्य्यतया शक्यं ज्ञाप्यतया वा' – इति ।

असतोऽकार्य्यत्वात् , न प्रथमस्य कल्पस्य प्रसरः ।

द्वितीये च ज्ञानजन्यज्ञानविषयत्वार्थं ज्ञानान्तरसापेक्षतयाऽनवस्था दुरवस्था ।

यदि च शक्तिर्नाभ्युपेयेत , तदा नेयं दूषणततिः ।

विज्ञानमेवासतः प्रकाश – इत्युक्तिरपि सदसततोस्सम्वन्धासम्भवादिना प्रतिभणिता । द्वयोरेवासत्त्वं स्वीकुर्व्वति माध्यमिके तु नेदं दूषणम् । असतोरपि निरुपाख्यत्वे न सम्वद्धता । अनिर्व्वाच्यत्वे तु सम्भवेदेव । सम्वन्धोऽप्यनिर्व्वाच्य इत्यन्यदेतत् । असत्यप्यर्थक्रियाकारित्वं सावृतं वा सत्त्वं स्वीचकार स इति , न निरुपाख्यत्वनिवन्धनो दोषः । सर्व्वत्र भ्रान्तिव्यवहारयोस्सांवृतत्वसाम्यादेव च

प्रतियोगिनि दृष्टे च जाग्रद्बोधे मृषा भवेत् ।

स्वप्नादिदृष्टिरस्माकं तव भेदोऽपि किंकृतः ॥

इति वौद्धं प्रति भट्टोक्तं सङ्गच्छते ।

स्वामी शङ्करचैतन्यभारती

नासद्विना तदनुभवो निरूप्यत इति , तयोरविनाभाव एव – इत्यपि तादात्म्यतदुत्पत्त्योरभावात्प्रत्युक्तम् । निरूप्यनिरूपकभावमप्यमुमनिर्वचनीयतैव समादधाति – इति तु मनोरमम् ।

असन्तं सत्त्वेनावगाहनात् , सदन्तरं वा सदन्तरात्मनावगाहनात् , सदसत्त्वेन वावगाहनात् ज्ञानानां मिथ्यात्वम् – इति विकल्प्य खण्डयन्तोऽपि श्रीमदुदयनाचार्य्यादयोऽस्मदनुकूला एव । सर्वथैवानिर्वाच्यत्वस्यैव ख्यापनात् ।



असदेव यदि सत्त्वेनावगाढं , तदा पुरोवर्त्तिनि प्रवृत्तिर्न शक्योपपादा ।

मध्ये च कल्पे इष्टापत्तिं चक्रुस्संसर्गस्यैव तत्रासत्त्वस्य पर्यवसानात् – इत्याशयेन । तदेतदपि पूर्वं खण्डितम् ।

तृतीयस्तु कल्पो न प्रवृत्त्यौपयिक – इति स्वत एव चूर्णित इति । वेदान्तानुसारेण पूर्वाभिहितं खण्डनन्तु ज्याय इति ।

ब्रह्मसत्त्वसिद्धौ चासत्त्वं न ज्ञानविषयतासमनियतम् – इति सिद्धम् ।

भ्रमविषयत्वं प्रमाविषयत्वव्याप्यं न वा – इति विप्रतिपत्तिस्तु न स्वातन्त्र्येण निरासमपेक्षते । खण्डितत्वात् । निरसिष्यमाणत्वाच्च । अन्यथाख्यात्याद्यन्तर्गतैव सा ।

अख्यात्यन्यथाख्यातिवादिनोर्विप्रतिपत्तिरधुना निरास्या ।

अथाख्यात्युपपादनम् ।

तत्र यद्यपि – 'सर्वे प्रत्यया यथार्थाः , प्रत्ययत्वात् , घटप्रत्ययवत्' – इत्यनुमानं न साधु , रजतस्मरणेदमनुभवयोः पक्षतायां सिद्धसाधनात् । विशिष्टज्ञानस्याप्रसिद्धतया पक्षान्तर्गतत्वे आश्रयासिद्ध्यापत्त्या न पक्षतावच्छेदकावच्छेदेनानुमितावपि निस्तारः । 'सर्वं ज्ञानं धर्मिण्यभ्रान्तम्' – इति नीत्या धर्म्यंशे याथार्थ्याङ्गीकारात्सिद्धसाधनमपि । 'ज्ञानत्वं विशेष्यावृत्तिप्रकारकवृत्ति न , ज्ञानत्वावच्छिन्ननिरूपितवृत्तिताश्रयत्वात् , प्रमात्ववत्' । हेतावच्छेदकता अनतिरिक्तवृत्तित्वरूपा प्रविष्टा , न त्वन्यूनानतिरिक्तवृत्तित्वरूपा ; तेनारोपवादिभिर्दृष्टान्ते साधनवैकल्यं न देयम् । इच्छाया विशेष्यावृत्तिप्रकारकतास्वीकारात्तत्र प्रतियोगिप्रसिद्धिर्बोध्या । न च – 'एतच्चक्षुरेतच्चक्षुर्जन्ययथार्थज्ञानत्वावच्छिन्नप्रतियोगिताकभेदवज्ज्ञानजनकम् , इन्द्रियत्वात् , मनोवत्' – इति सत्प्रतिपक्षश्शङ्क्यः । चाक्षुषज्ञानातिरिक्तज्ञानजनकत्वस्योपाधित्वेनाप्रयोजकत्वात् । न च – पक्षमात्रव्यावर्त्तकतयाऽनुपाधित्वं ; भवन्मतेऽनुकूलतर्काभावात् , मन्मते चानुकूलतर्काणां वक्ष्यमाणत्वात् । तादृशस्याप्युपाधित्वे बाधकाभावात् – इत्यपि न साधु । विशेष्यावृत्तिप्रकारकत्वेनोभयवादिसम्मतयोरिच्छाव्यवहारयोर्वृत्तित्वाभावस्य ज्ञानत्वे प्रतिवादिनामिष्टत्वेन सिद्धसाधनात् ।

तथापि – 'ज्ञानत्वं विशेष्यावृत्तिप्रकारकवृत्तित्वात्यन्ताभावाधिकरणं , ज्ञानत्वावच्छिन्ननिरूपितवृत्तिताश्रयत्वात् , प्रमात्ववत्' – इति सम्भवति । भ्रान्तिवादिभिस्तादृशवृत्तितायास्वीकारान्न सिद्धसाधनं देयम् । न च –दुष्टसामग्र्यप्रसूतमात्रवृत्तित्वस्योपाधित्वम् – इति वाच्यम् । मन्मते ज्ञानत्वस्यापि तादृशत्वेन साधनव्यापकत्वात् । तस्मात् , दोषासंस्पृष्टमिदमनुमानम् ।

रजताकारज्ञानस्य च कथं शुक्तिविषयकत्वम् । भासमानत्वं हि विषयत्वम् । भासते हि रजतं , न शुक्तिरिति । रजतेच्छाजन्यशुक्तिविशेष्यकप्रवृत्तिजनकं रजतविषयकं ज्ञानं शुक्तिविषयकेतिपदाभिलप्यं न , शुक्त्यभासकत्वात् , यज्ज्ञानं यन्न भासयति तज्ज्ञानं तद्विषयकेतिपदाभिलप्यं न भवति , सम्प्रतिपन्नवत् । हेतुसाध्ययोरैक्यं मा शङ्कीति साध्यस्य पदाभिलप्यत्वघटितत्वं समपादि । एवं तादृशं पुरोवर्त्तिविषयकं ज्ञानं रजतत्वप्रकारकेतिपदवाच्यं न , रजतत्वाभासकत्वात् – इति बोध्यम् । उभयत्र हेत्वभावस्तु पक्षे न शङ्क्य एव । अन्यविषयकज्ञानस्यान्यभासकत्वे सर्वसर्वज्ञतापत्तेः । रजताभावेऽपि ज्ञानस्य रजताकारत्वे साकारवादापत्त्या

वाह्यप्रपञ्चाप्र(प)लापापत्तिः । संविदो व्यभिचारित्वे च निष्कम्पं न क्वापि प्रवर्त्तेत जनः । अभ्युपगते हि भ्रमे तत्सामान्यनिवन्धनोऽन्यत्रापि भवेत्प्रामाण्यसंशय इति , तन्निवृत्त्यर्थं मानान्तगवेषणायां परतः प्रामाण्यवादो दत्तपदो भवेत् – इति स्वप्नेऽपि स्वतःप्रामाण्यवादिभिर्न युक्ताभ्युपगमो भ्रमः । परतःप्रामाण्यालम्विभिरपि निष्कम्पप्रवृत्त्युपपत्तये न सोऽभ्युपेय – इति गूढाभिसन्धिः । रजतप्रत्यक्षे तत्संयोगस्य रजतत्वप्रत्यक्षे च तत्संयुक्तसमवायस्यापेक्षिततया , तयोरभावान्न तयोः प्रत्यक्षता सम्भविनी । दोषाणाञ्च प्रतिवन्धकत्वं , न तु विपरीतकार्यावहत्वमपि ; येन दूपितलोचनं तत्र हेतुतापदेऽभिषिच्येत ।

विमतं रजतज्ञानं पुरोवर्त्तिविषयं , रजताद्यर्थिनस्तत्र नियमेन प्रवर्त्तकत्वात् – इत्यनुमानं त्वप्रयोजकम् । स्वरूपतो विषयतश्चागृहीतसंसर्गज्ञानद्वयादेव प्रवृत्त्युपपत्तेः । इदमिति चाक्षुषं ज्ञानं , रजतमिति च प्रमुष्टतत्ताकस्मृतिः । निरन्तरोत्पन्नत्वाच्च विवेकाग्रहः । भवद्भिरपि विवेकाग्रहहेतुक एवारोपो वाच्यः । तथा च , 'तद्धेतोरेवास्तु हेतुत्वं किं तेन' – इति न्यायेनोभयाभ्युपेयविवेकाग्रहादेवोपपत्तेः किमारोपेण विशिष्टात्मकेन । एवञ्च गौरवपराहतमपि भवदनुमानम् । न च - मिथ्याज्ञानानभ्युपगमे , इष्टभेदाग्रहाद्यथा प्रवृत्तिः , एवमनिष्टभेदाग्रहान्निवृत्तिरपि प्रसज्येत – इति वाच्यम् । अभावाप्रतियोगित्वेनोपस्थितस्यैवेष्टस्यानिष्टस्य वा प्रवृत्तिनिवृत्तिहेतुत्वात् । यत्र 'इदं रजतं , न शुक्तिः' – इति ज्ञातं , तत्र प्रवृत्तिरेव । अनिष्टायाश्शुक्तेरभावप्रतियोगित्वेनोपस्थितेरनिवर्त्तकत्वात् । यत्र च 'इयं शुक्तिः , न रजतम्' – इति प्रतीतं , तत्रेष्टरजतस्याभावप्रतियोगित्वेनोपस्थितेरप्रवर्त्तकत्वेन निवृत्तिरेव – इति विवेकः । एतेन – रजते 'नेदं रजतम्' – इति भ्राम्यतोऽपि रजतार्थिनस्तत्र प्रवृत्तेरापत्तिः , रजते तद्भेदग्रहस्वीकारेऽन्यथाख्यातिभिया 'इदम्' – इति , 'न रजतम्' – इति च ज्ञानद्वयस्य स्वीकर्त्तव्यत्वात् – इति प्रत्युक्तम् । तत्र रजतस्य भेदप्रतियोगित्वेनैवोपस्थितेः ।

ननु संवादिप्रवृत्तिस्थले विशिष्टज्ञानस्य प्रवर्त्तकत्वं दृष्टं , तथात्राप्यस्तु । प्रवृत्तित्वेन विशिष्टज्ञानत्वेन च कार्यकारणभावे लाघवात् । भवन्मते कारणताद्वयी । सापि च गुर्वी ; संवादिप्रवृत्तित्वावच्छिन्नं प्रति विशिष्टज्ञानत्वावच्छिन्नैका , विसंवादिप्रवृत्तित्वावच्छिन्ननिरूपिता अगृहीतसंसर्गकज्ञानद्वयावच्छिन्ना चापरा – इति । वह्नित्वेनेन्धनत्वेन सत्येव कार्यकारणभावे तार्णादिवह्नित्वेन तृणत्वादिना च कार्यकारणभावः कल्प्यते । 'यत्सामान्ययोः कार्यकारणभावः , तद्विशेषयोरपि' – इति न्यायेन । अत्र तु सामान्यकार्यकारणभावासम्भवात् , न विशेषोऽपि शक्य – इति चेत् । मैवम् । सत्यरजतस्थलेऽपि रजतपुरोवर्त्तिज्ञानत्वेन कारणतैका सामान्यात्मिका विशिष्टज्ञानत्वावच्छिन्नकारणतापेक्षया लघ्वी । सत्यपि भेदग्रहे , 'इदं रजतज्ञानयोर्माभूत्प्रवर्त्तकता' – इति 'भेदाग्रहे सति' – इति विशेषणीयम् । किञ्चिद्धर्मावच्छिन्नविशेष्यतानिरूपितकिञ्चिद्धर्मावच्छिन्नप्रकारताकज्ञानत्वं हि विशिष्टज्ञानत्वं गुरुतमम् । अथ 'भेदाग्रहे सति' – इत्येतावन्मात्रस्यानुपयुक्तत्वात् , 'इष्टपुरोवर्त्तिनोर्भेदाग्रहे सति' – इति विशेषणीयम् । तथा च तयोस्सत्यस्थले भेदाप्रसिद्ध्या भेदग्रहाभावस्य हेतुत्वं कथं सम्भवेत् – इति चेत् । पुरोवर्त्तिनिष्ठस्येष्टभिन्नत्वप्रकारकज्ञानविशेष्यत्वाभावस्य हेतुत्वे सामञ्जस्यात् , इष्टभिन्नत्वप्रकारकज्ञानविशेष्यताया अन्यत्र प्रसिद्धिमुपगताया अभावस्य सत्यस्थले पुरोवर्त्तिनि निरावाधत्वात् ।

नन्वेवं क्वापि विशिष्टज्ञानं न प्रसिध्येत् । सर्वत्र भेदाग्रहेणैव प्रवृत्त्यादेः सेत्स्यमानत्वात् । तथा च शब्दानुमानादीनां प्रमां प्रत्यजनकत्वेन तेषां प्रामाण्यं दत्त(ज)लाञ्जलि प्रसज्येतेति चेत् । मैवम् । यत्रेन्द्रियसंयुक्तसमवायेन रजतत्वमन्वभावि , तत्रैतत्सन्निकर्षप्रविष्टसंयुक्तत्वबलाद्रजतानुभवोऽप्यावश्यकः । तथा चैवं सत्यस्थलेषु धर्मधर्मिविषयकमेकं ज्ञानं सिध्यत् केन वार्यते । प्रकृते त्वन्याकारज्ञानस्यान्य(या)लम्वनत्वे विरोधस्याधस्तान्निवेदितत्वात् , नैकं ज्ञानं सेमर्हति द्धु(सेद्धुमर्हति) ।

स्वामी शङ्करचैतन्यभारती

स्यादेतत् । यत्र वह्निसंशीत्यनन्तरं धूलीपटलं धूमतया निश्चित्य वह्न्यभाववति वह्न्यर्थी प्रवर्तते , तत्र प्रवृत्तिं प्रति धूमभ्रमो हेतुर्वाच्यः । स धूमभ्रमो भवन्मते यथा तथास्तु , किन्तु हुतभुगादानानुकूलकृतिजनने तस्य को व्यापार इति विचारणीयम् । भेदाप्रतियोगित्वेनोपस्थितिविषयीभूतकूपीटयोरन्यसंसर्गाग्रह एव तत्र व्याप्रियते इति चेन्निरचायि । तदा धूमप्रत्ययेन किमकारि , तस्मात् प्रागपि तादृशासंसर्गागृहीतेर्लब्धप्राणत्वात् । संशीतौ हि भेदाप्रतियोगितया हुताशनेन विषयतापदमलम्भयेव । असंसर्गाग्रहेणापि तदीयेनावर्त्त्येव । न हि एकस्मिन् विशेष्ये स्वातन्त्र्येणोपस्थितिविषयतापन्नविरुद्धानेकधर्माणामसंसर्गाग्रहादन्यः संशयः । तस्मात् , सन्देहेनैव प्रवृत्त्यापत्त्या धूमप्रतीतिर्वैयर्थ्यमश्नुवीतैव । यदि च तत्र निर्वह्नौ वह्न्यनुमितिमेव व्यापारयसि , तदा भ्रान्तिर्लब्धपदा प्रसरं लभेतैव । यदि च तत्राशुशुक्षण्यनुमितमपि भेदागृहीतिमेव मनुषे , पर्वतस्य प्रत्यक्षतयाऽनलस्य च स्मर्यमाणतया भेदाग्रहसामग्र्याः सत्त्वात् ; तदा प्रत्यक्षभ्रमात्मकं विशेषमुत्प्रेक्षसे , 'अग्निं साक्षात्करोमि' – इत्यनुव्यवसायापत्तिं च कथं समर्थयसे इति चेत् । कोऽयं पूर्वपक्षप्रवालो मम वादिदन्तिनः । व्याप्तिहव्यवाहनस्मृतिद्वय्येव तत्र व्याप्रियताम् । हेतुप्रत्ययसमनन्तरभावित्वं प्रतिसन्दधता चानुमिनोमीत्यनुव्यवस्यताम् । तथा च न काप्यनुपपत्तिर्जागर्ति ।

अयथार्थविशिष्टप्रतीतौ च न किमपि प्रमाणमुत्कलयामो , येन सास्माकं मानसे स्थातुमीहेतापि । ननु पक्षविशेष्यकलिङ्गप्रकारको हि निश्चयोऽनुमितिजनकतापदेऽभिषिक्तस्तर्कचुञ्चुभिः । तथा च लिङ्गाभासाज्जनिमनुभवन्ती अनुमितिर्लिङ्गवैशिष्ट्यज्ञानादेव भवेत् । तथा च तदेवायथार्थप्रतीतिं विस्तृणुयात् इति चेत् । नूनं प्रस्मृतोऽसि । तत्रापि लिङ्गासंसर्गाग्रहादेवोपपत्तेः ।

एतेन विवादपदानि पदानि स्वस्मारितपदार्थान्वयप्रतिपादकानि , आकाङ्क्षासन्निधिमत्पदकदम्बकत्वात् , गामानय – इति पदकदम्बवत् – इति श्रीचित्सुखानुमानमपि निरस्तम् । अप्रयोजकत्वात् । अयोग्ये योग्यताया असंसर्गाग्रहादेवोपपत्तेः । ननु सर्वेषां ज्ञानानां प्रमात्वे यथार्थत्वायथार्थत्वव्यवहारः सार्वलौकिकः कथम् – इति चेत् । सफलप्रवृत्तिजनकत्वाजनकत्वाभ्याम् – इत्यवेहि । पुरोवर्त्तिनि प्रवृत्तेः प्रतिबन्धकत्वेन च नेदं रजतम् – इत्यादिबाधकानां बाधकत्वमप्युपपद्यतेतराम् । तस्मात् , विमतं ज्ञानं व्यधिकरणप्रकारकत्वानधिकरणं , ज्ञानत्वात् , घटज्ञानवत् – इति ।

यदाहुः –

अहो वत महानेष प्रमादो धीमतामपि ।<br>
ज्ञानस्य व्यभिचारित्वे विश्वासः कन्निबन्धनः ॥

- इति ।

एवं तत्तांशस्य ख्यातेर्ग्रहणस्याभावात् प्रमुष्टतत्ताकस्मृतिरख्यातिः – इति ; अथवा – विवेकस्य ख्यातेर्ग्रहणस्याभावात् , अख्यातिः – इति नारमणीयम् । तदेतत्सकलं समकलि विकलयितुं गुरुमतम् । - इति ।

अख्यातिनिरासोऽन्यथाख्यात्युपपत्तिश्च ।

अथात्र भ्रान्तिवादिनः प्रत्यवतिष्ठन्ते ।

ज्ञानत्वं विशेष्यावृत्तिप्रकारकवृत्तित्वात्यन्ताभावाधिकरणं , ज्ञानत्वावच्छिन्ननिरूपितवृत्तित्वाश्रयत्वात् , प्रमात्ववत् – इत्यनुमानं न तावत्साधु । दुष्टसामग्र्यप्रसूतमात्रवृत्तित्वरूपोपाधिना कवलितत्वात् । न च ज्ञानत्वस्यापि तादृशत्वेन साधनव्यापकता – इति शङ्क्यम् । ज्ञानत्वे तादृशत्वस्याऽव्याप्यनिर्णीतत्वेन सन्दिग्धोपाधित्वस्य निराबाधत्वात् । तादृशस्यापि तर्कसरणिविद्भिरुपाधित्वस्य स्वीकृतत्वात् ।

स्वामी शङ्करचैतन्यभारती

यच्च रजतेच्छाजन्यशुक्तिविशेष्यकप्रवृत्तिजनकं रजतज्ञानं शुक्तिविषयकेतिपदवाच्यं न , शुक्त्यभासकत्वात् – इत्यनुमानद्वयम् ; तदपि न । किमत्र शुक्तित्वावच्छिन्नविषयताकेतिपदाभिलप्यत्वाभावः साध्यते , किं वेदन्त्वावच्छिन्नविषयताकेतिपदाभिलप्यत्वाभावः । आद्ये , सिद्धसाधनम् । अपस्मिन् , तवैवानुभूतिविरोधः । प्रवर्त्तते हि पुरोवर्त्तिनीदमि जनोऽङ्ग(ङ्गु)लिनिर्देशपुरस्सरम् । एवञ्च , न सर्वसार्वज्ञ्यमपि । यथोचितं स्वीकारात्सम्भवदिदमादेर्विषयत्वं न त्यज्यते , असम्भवञ्च नोपादीयते । विशिष्टज्ञानं हि सर्वत्र विशेषणविशेष्यविषयकं दृष्टचरम् – इति , अयथार्थेनापि तेन तथैव भाव्यम् । ज्ञाने रजतत्वं नाभ्युपगतम् – इति , न साकारवादिमतप्रवेशः ।



यत्तु – संविदां व्यभिचारित्वेऽनाश्वासं मन्यसे । तत्र वक्तव्यं – परतःप्रामाण्यपक्षे तावदनाश्वासो यथार्थत्वाज्ञानं वा , यथार्थायथार्थत्वसन्देहो वा । आद्ये , सफलप्रवृत्तिजनकत्वेन हेतुनैव प्रामाण्यानुमितौ यथार्थत्वाज्ञानं निवर्त्स्यति । तादृशसन्देहस्तु विशेषनिश्चयात्पूर्वमिष्यत एव । स्वतःप्रामाण्यपक्षेऽपीत्थमालोचनीयं – व्यभिचारित्वेनानाश्वासं ददता किमव्यभिचारित्वं प्रामाण्यं वा प्रामाण्यव्यापकं वा प्रामाण्यहेतुर्वा स्वीक्रियते , येन पक्षत्रयेऽपि सति व्यभिचारित्वेऽप्रामाण्यमापाद्यते । प्रथमे प्रामाण्यव्यभिचारित्वयोर्भावाभावतया , द्वितीये व्यापकाभावेन व्याप्य(प्या)भावमुद्रया , तृतीये कारणाभावेन कार्य्याभावद्वारा । सितासितादिविषयान्व्यभिचरदपि चक्षुर्न प्रामाण्यं जहाति – इति , नाव्यभिचार्येव प्रमाणम् । नाप्यव्यभिचारित्वम(वं प्र)प्रामाण्यम् । हेतुत्वव्यापकत्वयोरप्येतेन निरासः । नो चेत्कथमव्यभिचारित्वरूपस्य व्यापकस्य हेतोर्वाऽभावा चक्षुरादिषु प्रामाण्यमवतिष्ठेत । यदि च - ज्ञानस्यैत्र(व) व्यभिचारो दोषतामावहति , तथैव च मम मतं , कारणानां व्यभिचारित्वं तु दूषकतया न ममापि सम्मतम् – इति भणसि ; तर्हि ज्ञानमव्यभिचारमपेक्षमाणं विषयावभासे वापेक्षते प्रवृत्त्यादौ वा । आद्ये , ज्ञानं विषयमवभासयदेवोत्पद्यते , अन्यथा का तस्य ज्ञानतापि – इति , न तत्रापेक्षते । नान्तिमोऽपि कल्पः । परतःप्रामाण्यस्यानवस्थापादकत्वेन , क्वचिद्विश्रान्तौ च तस्य विश्रान्तिस्थानस्यानिश्चितप्रामाण्यकतया प्रथमस्यापि प्रामाण्यानिश्चायकत्वप्रसङ्गेनास्वीकारात् । स्वतःप्रामाण्यं त्वव्यभिचारित्वरूपमप्रामाण्यं यथाऽर्थक्रियासंवादादिज्ञाने स्वतो गृहो(ही)तम् , एवं प्रथमेपि तस्य स्वत एव ग्रहात् कानाश्वासशङ्कापि । प्रामाण्यस्य स्वतस्त्वञ्च प्राथमिको यो ज्ञानग्रहस्तद्ग्राह्यत्वम् । असंवादिव्यवहारजनकतां ज्ञानेष्वभ्युपगच्छता चानाश्वासशङ्काप्रसक्तेस्त्वया स्वतःप्रामाण्यमालम्ब्यैव समाधेयत्वात् । अत एव च परतःप्रामाण्यापादकत्वं न भ्रमाङ्गीकारस्य । अन्यथा , त्वमपि कथं मुच्यसे यत्रोक्तं –

रजतेऽनुभवः किं स्याद्युत प्रमुषिता स्मृतिः ।
द्वैविध्यदर्शनादेवं भवेत्तत्रापि संशयः ॥
संशयानश्च संवादं नूनमन्वेषते जनः ।
तदपेक्षाकृतं तस्मात्प्रामाण्यं परतो ध्रुवम् ॥

- इति ।

दोषविशिष्टकरणानां च विपरीतज्ञानहेतुत्वं सम्भवति ।

यन्नाशकं , तन्न जनकम् - इति तु न । एकस्यैव वनानलस्य वेत्रवीजनाशकत्वरूपान्तरजनकत्वयोर्दृष्टत्वात् । अपि च ,

सुवते शालयो दुष्टा न यद्यपि यवाङ्कुरम् ।
शालिकार्यं त्वपूपादि जनयन्त्येव(?) कल्मषम् ॥

स्वामी शङ्करचैतन्यभारती

- इति न्यायेन दुष्टेन्द्रियाणां विपर्ययजनकत्वं सम्भवत्येव ।

अनिर्वाच्यरजतोत्पत्तिमभ्युपगच्छतां सामग्रीसम्भवो वक्ष्यते ।

नैयायिकानां मतेऽपि विशेषणज्ञानविशेष्यसन्निकर्षासंसर्गाग्रहाणां त्रयाणां विशिष्टधीनिमित्तानामत्र सम्भवात् । तथा हि , असंसर्गाग्रहस्तु भवत्सम्मत एव । रजतसाक्षात्कारे च रजतसंयोगस्य हेतुत्वं विशेष्यसन्निकर्षत्वेनैव वाच्यम् । तथा च विशेष्येण तेन ज्ञानलक्षणसन्निकर्षोऽस्त्येव । रजतत्वञ्च विशेषणं ज्ञातमस्त्येव । पुरोवर्त्तिनापि च संयोगः सन्निकर्षो वर्त्तते एव । प्रत्यभिज्ञानवत्संस्कारेन्द्रियाभ्यां विशिष्टज्ञानञ्च सम्भवत्येव । न च – प्रत्यभिज्ञानं ग्रहणस्मरणात्मकज्ञानद्वयमेवास्ताम् – इति शक्यमपि । अभेदो दत्तजल(ला)ञ्जलिः कृतः स्यात् । तथा च , क्षणभङ्ग एव शरणं भवेत्तव । न ह्यभेदे तदतिरिक्तं मानमाकलयामः । सोऽयम् – इत्यत्रायम् – इति विद्यमानविषयकानुभवसमानविषयकत्वात्स्मृतेः । समानविषकत्वस्थले च तयोस्सहकारितास्वीकारात् , प्रत्यभिज्ञानप्रमाणकोऽभेदः सेत्स्यत्येव – इति चेत् । स्यादेवं , यदि समानविषयत्वं तयोर्ज्ञायेत । तदेव तु ज्ञातुं न प्रभवामः । अनुभवो यदि स्मृतिमवगाहेत , स्मृतिर्वानुभवमालम्बेत ; तदा परस्परं गृह्णन्तौ तौ समानविषयतामपि कथञ्चिद्गृह्णीयाताम् । न त्वेवम् । स्वप्रकाशयोरपि तयोः परस्पराचुम्बनात् । न च – ज्ञानान्तरेणापि तयोरेकविषयत्वं शक्यग्रहणं , तदानीं तयोस्स्थातुमेवाशक्तत्वात् , क्षणिकत्वात् । नापि च – स्मर्यमाणयोस्तयोस्समानविषयत्वं विषयीकृतं कस्यचिदुपकरोति , स्मृतेरप्रमाणत्वात् । तस्मात् , प्रत्यक्षमेव तावत् 'पुरोवर्त्तिनं रजततया प्रत्येमि' – इत्याकारकम् "'इदं रजतम्' – इति ज्ञानं मम मिथ्यैव प्रादुरभूत् , न तु ज्ञाने प्रादुरभूताम्" – इति च तव मुखमुद्रणं कर्त्तुं क्षमते । एतादृशं सार्वजनीनं चानुभवं रजतत्वप्रकारकज्ञानविषयत्वासंसर्गाग्रहादिनाऽन्यथयतस्त्वत्तो लज्जैव लज्जिता परम् । तथाप्यधिकमपि शुश्रूषमाणाय ते किमपि श्राव्यमेव मया ।

तथा हि , ज्ञानद्वयात्प्रवृत्तिरेव न सम्भविनी । अगृहीतभेदात्तस्मात्प्रवृत्तिमिच्छन्भेदग्रहस्य प्रतिवन्धकस्याभावं कारणतया स्वीचिकीर्षसि । प्रतिवन्धकाभावस्य च हेतुत्वं पराकर्त्तुमीश्महे । भवेत्तस्य कारणत्वं , यद्यन्वयव्यतिरेकमात्रेण कारणता भवेत् । अनन्यथासिद्धाभ्याञ्च ताभ्यां भवन्ती न प्रतिवन्धकाभावे स्थातुमीष्टे , कारणे विशेषणत्वात् , कारणतावच्छेदकत्वाद्दण्डत्वादिवदन्यथासिद्ध एव सः । न च – विशिष्टस्य कारणत्वे , विशेष्यविशेषणभावे विनिगमनाभावादुभयोरेव कारणता पर्यवस्यति – इति वाच्यम् । यतो लोकनुभवमनुरुन्धाना वयं कार्यकारणभावं कल्पयामो , नं तूत्प्रेक्षामात्रेण , येनैवमनुयुज्येमहि । अप्रतिवद्धः पाणिहुताशनयोगो हेतुः , नं तु तत्संयोगविशिष्टः प्रतिवन्धाभावः – इति लौकिकव्यवहारादेव कल्प्यते । प्रतिवन्धकशून्येनाग्निनाजनि दाह – इत्यपि ते व्यवहरन्ति , न त्वग्निमता प्रतिवन्धकाभावेन – इति ।

एतेन –विशिष्टकारणतादिस्थले विशेष्यविशेषणभावे विनिगमकाभावमवलोक्य , गौरवमापादयन् तत्तद्ग्रन्थेषु गदाधरभट्टाचार्यादिः – अपास्तः ।

अभिदधे च वाचस्पतिमिश्रैर्न्यायवार्त्तिकतात्पर्यटीकायां –

'यद्यपि गुरुत्वं समवायिकारणमपेक्षते , तथापि चरमनिमित्तान्तरं नाप(पे)क्षत – इत्यर्थः । यद्यपि प्रतिवन्धापगमो भवति चरमभावी , तथापि न निमित्तान्तरं , प्रतिवन्धे सति गुरुत्वं न करोति , कार्यं त्वौत्सर्गिकं , न पुनः प्रतिवन्धकाभावस्यापि तत्र निमित्तभावकल्पना युक्ता , तदन्वयव्यतिरेकस्यान्यथासिद्धेः ।'[73]



- इति ।

एवञ्च , कारणीभूताभावप्रतियोगित्वं न प्रतिवन्धकत्वम् । किन्तु , सत्यां सामग्र्यां कार्यानुत्पादप्रयोजकत्वमेव – इत्यवधेयम् । स्वरूपमेव भेदमभ्युपगच्छतश्च प्राभाकरस्य मते स्वप्रकाशाभ्यां स्मृतिग्रहणाभ्यां स्वरूपग्रहणादेव भेदसिद्धेः , कथमयं भेदाग्रहोऽपि । स्वरूपमगृह्णतश्च का स्वप्रकाशतापि । दोषवशात् , न गृह्यते इति चेत् । तत् , किं ज्ञानयोरनुत्पत्तिमेव वाञ्छसि । न हि – अस्वप्रकाशस्य ज्ञानस्य त्वन्मते उत्पत्तिर्नाम । मा च कार्षीद्ग्रहणं स्वविवेकं , विशेषाविषयत्वात् ; विशेषमवगाहमाना स्मृतिस्तु विविच्यादेव स्वात्मानं ग्रहणात् – इति ।

एवं , विषयस्वरूपयोरपि ताभ्यां ग्रहणात् , स्वरूपात्मको भेदः प्रकाशित एव विषययोरपि – इति , विषयतोऽपि विवेकाग्रहो न शक्यसमर्थनः । अपसिद्धान्तमगणयंश्च वैधर्म्यमपि भेदतया यद्युपेयात् , तदपि पुरोवर्त्तित्वरजतत्वरूपं ग्र(गृ)हीतमेव – इत्यास्तां विस्तरः ।

न च – इयं वाधा वेदान्तिनोऽपि कथं मोक्ष्यति , तैरपि स्वप्रकाशज्ञानस्वीकारात् , भेदाग्रहस्य चाध्याससामग्र्यन्तर्गतत्वात् – इति वाच्यम् । वृत्तिरूपज्ञानानां स्वप्रकाशत्वं न तेन स्वीकृतं , किन्तु साक्षिणः । स च तयोस्स्वरूपमात्रं गृह्णाति । तच्च न भेदः , किन्तु , अन्योन्याभावः । तस्य चानुयोगित्वेन प्रतियोगित्वेनोपस्थितावेव धर्मिप्रतियोगिनोर्ग्रहस्सम्भवति । साक्षिणा च वाह्यपदार्थग्रहणे ज्ञानान्तरापेक्षणात् । 'ज्ञाततयाऽज्ञाततया वा साक्षिविषयस्सर्वोऽपि पदार्थ' – इति हि ते जगुः । प्रतियोगित्वानुयोगित्वविषयकज्ञानान्तराभावे चान्योन्याभावाग्रहात् , सम्भवत्येवाध्यासस्तेषां मते । न च – एवं भेदग्रहार्थं प्रतियोगितयाऽनुयोगितया चोपस्थितेरपेक्षितत्वे , भेदग्रहं विना तस्या असम्भवात् , स्यादन्योन्याश्रय – इति वाच्यम् । अस्यानिर्वाच्यत्वपोषकत्वेनेष्टत्वात् ।

यदाहुः –

अनवस्थादयो दोषाः सत्तां निघ्नन्ति वस्तुनः ।

अद्वैतिनां ते सुहृदः प्रपञ्चे तत्भ्रसञ्ज्ञकाः ॥

- इति ।

तथा च , न सम्भवति भेदाग्रहः प्रभाकरमते कारणम् । अपि च , संवादिस्थले रजतपुरोवर्त्तिज्ञानं प्रवृत्तिकारणमस्ति । तत्र क्वचिज्ज्ञानद्वयस्य क्वचिदेकस्य प्रवर्त्तकत्वे गौरवात् , रजतपुरोवर्त्तिज्ञानत्वेन हेतुता कल्प्या । तत्र च मा भूद्युगपत्प्रवृत्तिनिवृत्तिद्वयं , मा च भूत् नेदं रजतम् – इति ज्ञानात्प्रवृत्तिः , तत्रापि पुरोवर्त्तिरजतज्ञानत्वस्य सत्त्वात् – इति , भेदाप्रतियोगित्वेनोपस्थितिः । भेदग्रहाभावस्य प्रतियोगितां गतो भेदग्रह – इत्यादिवहुकारणतावच्छेदकतया प्रवेश्यम् । मन्मते तु ज्ञानवित्तिवेद्यतया सत्त्वरोपस्थितिकं लघुभूतं

---

[73] भ २ आ २ सू १२ प्र २

वैशिष्ट्यमेव कारणतावच्छेदकम् – इति महल्लाघवम् । वैशिष्ट्यातिरिक्तस्य पुरोवर्त्तिरजतज्ञानत्वप्रविष्टतया त्वयापि स्वीकर्त्तव्यत्वात् । भवदीयं तु स्वातन्त्र्यादिकं कल्प्योपस्थितिकम् ।

ननु विशिष्टज्ञानकारणतया भेदाग्रहोऽप्यावश्यक – इति , तद्धेतोरेव – इति न्यायावतार – इति चेत् । न । विशिष्टज्ञाने कारणताक्लृप्त्यनन्तरं विशिष्टज्ञानं प्रति भेदाग्रहस्य कारणता कल्प्यतया , 'प्रवृत्तिं प्रति किं कारणम्' – इति विचारणावसरे तस्यानुपस्थितेः । अत एव , न 'तद्धेतोरेव' – इति न्यायावतारः । विशिष्टज्ञानं विना विशिष्टव्यवहारस्यैवासिद्धेः । अत एव च , भ्रमकल्पना न गौरवावहापि । सर्वानुभवसिद्धस्य प्रामाणिकस्यैव भ्रमस्य कल्पनात् । त्वयापि च प्रवृत्त्यर्थं ज्ञानयोरेकत्वाभिमानोऽभ्यमान्येव – इति भ्रान्तिमुपगन्तुं किं विलम्बसे । अभिमानोऽपि भ्रान्तिविशेषः तन्मूलको वा चित्तवृत्तिविशेषो भ्रान्त्युपगतिं विना कथं निर्वहेत । तस्मात् , यत्किञ्चिदेतत् ।

अपि च , भेदाग्रहात्प्रवृत्तिरेवासम्भविनी – इति भणितुं वयमुत्सहामहे । तथा हि – इदं रजतम् – इत्यत्रान्यथाख्यातिभियाऽभेदग्रहमनुपगत्यानिष्टभेदाग्रहान्निवृत्तिः कथं वार्यताम् । अनिष्टतावच्छेदकप्रकारकोपस्थितिविषयीभूतेनानिष्टेन भेदाग्रहाद्भवति निवृत्तिः । इदं रजतम् – इत्यत्र त्विदन्त्वमुपस्थितम् । तच्च नानिष्टतावच्छेदकम् । शुक्तित्वमनिष्टतावच्छेदकम् । तच्च नोपस्थितम् । - इति यदि ब्रूषे । तर्हि इदं रजतं न शुक्तिः – इत्यत्र शुक्तित्वरूपानिष्टतावच्छेदकस्योपस्थितेः , उपस्थितेन च तेन रूपेण शुक्तेर्भेदाग्रहीतेः । नो चेत् , अस्य भ्रमत्वानुपपत्तिः - इति , भवेदेव निवृत्तिः – इति निवृत्तेर्निवृत्त्यर्थमपि यतितव्यम् – इति प्राभाकरः कष्टां वताविष्टो दशाम् – इति दूयते मदीयं चेतः । मा खेदि त्वदीयेन मनसा – इति स्वातन्त्र्येणोपस्थितिविषयत्वेनानिष्टं विशेषणीयम् । उक्तस्थले च भेदप्रतियोगितया तस्योपस्थितिः – इति चेत् । अभावज्ञप्त्यर्थं प्रतियोगिज्ञप्तेः पूर्वमपेक्षणीयत्वे , तस्यां स्वातन्त्र्येणानिष्टस्योपस्थितेः कथमुक्तदोषान्मुच्यते । वणिग्वीथीस्थाभावप्रतियोगीदं रजतम् – इति शुक्तावेव सति ज्ञाने च न प्रवर्त्तेत जनः । रजतस्य प्रतियोगितयोपस्थितेः । यदि चानिष्टप्रतियोगिको यो भेदः , तस्यासंसर्गाग्रहं स्वातन्त्र्यं मन्यसे , इदं रजतं न शुक्तिः – इत्यत्र चानिष्टशुक्तिभेदस्यासंसर्गाग्रहो नकारार्थः , तथा चोपपत्स्यते प्रवृत्तिः – इति चेत् । तदपि न । इत्थं हि भेदग्रहस्याभावं कारणतापदेऽभिषिञ्चन्निरुक्तस्वातन्त्र्यञ्च कारणतावच्छे(द)कतयाऽभिलष्यन्गौरववन्यात्कथं मोक्षमवाप्स्यसि ।

अपि च , इमे रङ्गरजत – इत्येवं तादृशवाक्यादन्यथा वा यत्र रजतरङ्गयोरभ्राम्यज्जनः , तत्रेष्टतावच्छेदकानिष्टतावच्छेदकरूपाभ्यामुपस्थितयोः स्वतन्त्रयोर्भेदाग्रहाद्रङ्गरजतयोर्युगपत्प्रवृत्तिनिवृत्ती स्याताम् । तादृशभ्रममपलपंस्त्वनुभूतिं विरुणत्सि । नो चेत् , एवं क्वापि समूहालम्बनं मा भवत् – इति द्वित्वादिप्रत्यक्षता विलुप्येत । अपि च , लाघवात् , उपस्थितत्वाच्च , ज्ञानस्य स्वविषये प्रवर्त्तकत्वमवाधारि आद्यप्रवृत्तिस्थले संवादिप्रवृत्तिस्थले च । शुक्तौ च प्रावर्त्तयद्रजतज्ञानम् – इत्यपि निर्विवादम् । तथा च शुक्तिविषयत्वं तस्य गले पादुकान्यायेनापतितम् । न हि ज्ञानं क्वापि स्वाविषये प्रवर्त्तकं दृष्टचरम् । अथान्यथाख्यातिवादिनापि ग्रहणस्मरणे भेदाग्रहश्चानिर्वचनीयवादिनापि स्वीकृत एव – इति , तैरेव विसंवादिप्रवृत्त्युपपत्तौ विशिष्टज्ञानकल्पने गौरवमाकलयद्भिः प्रथमं निश्चितमपि विशिष्टं ज्ञानं त्यक्तव्यमेव – इति मनुषे । तर्हि प्रथमप्रवृत्तप्रमाणवलादेव सर्वत्रापि विज्ञानं विशिष्टं कल्पनीयम् , असञ्जातविरोधिन्यायेन । तस्मात् , विमतं ज्ञानं पुरोवर्त्तिवस्तुविषयम् – इत्याद्यनुमानमनुकूलतर्कशतैरुपेतत्वात् , समीचीनमेव – इति नाप्रयोजकतावसरः ।



स्वामी शङ्करचैतन्यभारती

अयं तु तस्य निष्कर्षः । रजतेच्छाजन्यशुक्तिविषयकप्रवृत्तिजनकं रजतत्वप्रकारकं ज्ञानं शुक्तिविषयकं , शुक्तिविषयकप्रवृत्तिहेतुज्ञानत्वात् , शुक्त्यर्थिसमवेतशुक्तिज्ञानवत् । तादृशमिदंविशेष्यकं ज्ञानं रजतविषयकं रजतेच्छाजन्यप्रवृत्तिहेतुज्ञानत्वात् , रजते इदंज्ञानवत् । उभयत्रापि पक्षे आद्यविशेषणं शुक्तिरजते – इति समूहालम्बनमादायार्थान्तरव्युदासाय । न च – दोषाजन्यत्वमुपाधिः , तव मते ज्ञानमात्रस्य दोषाजन्यत्वेन साधनव्यापकत्वात् । नापि – सफलप्रवृत्तिहेतुत्वमुपाधिः , रजतज्ञानसाहित्येन प्रवर्त्तके इदंज्ञाने तव मते शुक्तिविषयकत्वमस्त्युपाधिश्च नास्ति । एवं तवैव मते इदंज्ञानसाहित्येन प्रवर्त्तके रजतज्ञाने रजतत्वप्रकारकत्वमस्त्युपाधिश्च नास्ति – इति साध्याव्यापकत्वात् , न स उपाधिः । भेदाग्रहस्य प्रवृत्त्यु(त्त्य)हेतुत्वेन प्रयोजकत्वञ्च परिहृतम् । एतेन – विवादपदानि पदानि स्वस्मारितार्थान्वयप्रतिपादकान्याकाङ्क्षासन्निधिमत्पा(प)दकदम्बत्वात् , गामानय – इति पदकदम्बवत् – इत्यपि साधु । असंसर्गाग्रहणमात्रेणानुपपत्तेः । एवं ज्ञानत्वं विशेष्यावृत्तिप्रकारकवृत्ति प्रवृत्तिहेतुप्रत्यक्षविशेषगुणवृत्तिधर्मत्वात् , इच्छात्ववत् । इच्छायाः प्रवृत्तिहेतुत्वमस्त्येव । व्यधिकरणप्रकारकत्वमपि सर्वसम्मतम् । अदृष्टत्वमादाय व्यभिचारनिवृत्त्यै प्रत्यक्षेति विशेषगुणविशेषणम् । शत्रुभिन्नेऽपि 'शत्रुं द्वेष्मि' – इतिप्रत्ययात् , द्वेषत्वेऽपि व्यधिकरणप्रकारकत्वसत्त्वात् , न व्यभिचारः । अथवा – द्वेषस्य प्रवृत्तिहेतुत्वमेव नाभ्युपेमः । दुःखसाधनाभावसाध्यदुःखानुत्पादमुद्दिश्यैव शत्रुवधे प्रवृत्तिः । तथा च , तत्रापीष्टोपायताज्ञानादेव प्रवृत्तिः – इति । तस्मात् , संस्कारसचिवमिन्द्रियं व्यधिकरणप्रकारकं ज्ञानं जनयति – इति सिद्धम् ।

अन्यथाख्यातिनिरासः । अनिर्वचनीयख्यात्युपपादनञ्च ।

अथात्रानिर्वचनीयख्यातिमाश्रयद्भिः प्रतिविधीयते । व्यधिकरणप्रकारावच्छिन्ना या विषयता , तन्निरूपकत्वं भ्रमत्वम् । स्वाधिकरणावृत्तिनिष्ठप्रकारतानिरूपितविशेष्यतानिरूपकत्वम् – इति यावत् । स्वं - विशेष्यता । इदं रजतम् – इत्यत्र शुक्तिनिष्ठा विशेष्यता । तदधिकरणावृत्ति रजतत्वम् । तन्निष्ठप्रकारतानिरूपितविशेष्यता – इदंविशेष्यता । तन्निरूपकत्वस्य सत्त्वेन , लक्षणसमन्वयः ।

तदयमत्र प्राज्ञम्मन्यः प्रष्टव्यः । विशेष्यमपि प्रकारेणावच्छिद्यते न वा । अवच्छिद्यते – इति न वाच्यम् । कथं ह्यन्यवृत्तिधर्मेणान्यदवच्छिद्यताम् । सर्वैर्धर्मैस्सर्वेषामवच्छेद्यतापत्तेः । सर्वस्य सर्वात्मकतापत्तेः – इति यावत् । तथा च , अहो समर्थितस्स्याद्भेदवादः । नावच्छिद्यते – इत्यपि न ब्रूयाः । विशेष्यप्रकारयोर्विषययोः परस्परमवच्छेद्यावच्छेदकभावाभावे ज्ञानमसन्तमेवावच्छेद्यावच्छेदकभावं विषयीकरोति – इति मन्तव्यम् । तथा सति शून्यवादापत्तिपिशाची कथं त्वां मुञ्चेत्तार्किकभटम् । विषयतयोस्तु निरूप्यनिरूपकभावोऽस्ति – इति चेत् । विषययोस्तस्याभावे विषयतयोस्स कथम् । उक्तं हि तर्कप्रकरणे गदाधरभट्टाचार्यैः – 'न हि ययोस्सम्बन्धो न भासते , तद्विषयतयोर्निरूप्यनिरूपकभावो दृष्टचरः' – इति । दोषात् – इति चेत् । शून्यवादिनः सर्वस्य ज्ञानस्य दोषोत्पत्तिकत्वात् । दोषविशेषोऽभिमत – इति चेत् । दोषविशेषाणां परिगणितुमशक्यत्वात् । अविद्यातिरिक्तत्वेनानुगमोऽस्तु – इति चेत् । भ्रमस्याप्यविद्याहेतुकत्वेन शून्यवाद्यादिभिरस्माभिश्चाभ्युपगमात् । मया तावन्नाभ्युपेयत – इति चेत् । माभ्युपगाः । कथायामित्थंवादिनां पुरतो भणितुमयुक्तत्वात् ।

स्यादेतत् । विषययोरपि सोऽस्त्येवावच्छेद्यावच्छेदकभाव – इति चेत् । नन्वेतच्छ्रूयमाणमपि त्रपाकरम् – इति , चेतनेन भाव्यम् । भो , नावाधि मदीयो भावस्त्वया । अवच्छेद्यावच्छेदकभावः शुक्तिरजतत्वरूप एव प्रकृते , तस्याश्रयातिरिक्तस्यानभ्युपगमात् , शुक्तिरजतत्वयोश्च सत्त्वात् – इति चेत् । नन्वाधाराधेयभावोऽन्यत्वे उपपद्यमानोऽत्रानुभूयमानो नोपपद्येताभेदे – इति । अवच्छेदकता

रजतत्वे , अवच्छेद्यता इदम्पदार्थे – इत्यनुभवात् । न हि भवत्यभेदे रूपभेदेऽपि तद्धटे तत्कम्बुग्रीवादिमान् – इति । अन्यत्रास्तु यथा तथा , प्रकृते त्वन्यस्या गतेरभावात् , अभेदेऽपि सोऽस्तु – इति चेत् । अनिर्वचनीयताया अन्यस्या गतेर्जागरूकत्वात् । तव वामबुद्धेरपि मनसि सा स्थितैव । वाचोभङ्ग्यन्तरेण ब्रुवाणस्य तस्या निह्नवे लज्जैव परदर्शनस्वीकृतिहेतुका हेतुः । अतिरिक्त एव पदार्थस्तर्हि – इति चेत् । सोऽसन् वा शुक्तिरजतत्वयोस्सन्वा । सन् – इति ब्रुवाणस्तु मन्दाक्षमेव जयसि परं , न तु प्रतिवादिनम् । यतः सर्वस्य सर्वात्मकतापत्त्यापि न विभेषि । असन् – इति चेत् । शून्यवादगृहं प्रविश तर्हि । स्वरूपसम्बन्धविशेष एव स तत्र यथायोग्यं कल्प्यत – इति चेत् । अहो , किमिदं विशेषपदेनाभिधित्ससे । किमिति न व्यनक्षि । नूनं सैव भगवत्यनिर्वचनीयता त्वद्धृदयङ्गमाऽभूत् येन तन्नामापि वक्तुं लज्जसे । अहो तस्यां स्वानुराग एव प्रकटीकृतस्त्वया । विशेषपदेनानुभवसाक्षिकत्वं सूच्यते – इति चेत् । त्वादृशानुभवेऽस्माकं मनःप्रत्ययाभावात् । सर्वजनानामयमनुभव – इति निश्चेतुमशक्यत्वात् । बहुजनसिद्धानामपि देहात्मैक्यानुभवानां बाधदर्शनात् , तस्य प्रमात्वमपि कथं साधयिष्यसि । यथा कथञ्चिदनुभवस्त्वनिर्वाच्यत्वेऽप्युपपद्यते – इति वार्त्तमेवैतत् ।

एतेन तत्तल्लक्षणेषु विशेषपदं प्रक्षिप्य निर्वचनाभिमानिनो नैयायिका निर्वक्तुमसामर्थ्यं द्योतयन्तः पराहता वेदितव्याः । अत एव , बुद्धिविशेषविषयत्वमवच्छेद्यत्वादिकम् – इत्यपि निरस्तम् । बुद्धिरपि प्रमा भ्रान्तिर्वा । भ्रान्तिः - इति चेत् । किं भ्रान्त्या तामेव निरूपयितुं प्रवृत्तोऽसि । प्रमा – इति चेत् । तत्किं शुक्तिगतं रजतत्वावच्छेद्यत्वं प्रमितं मनुषे । अनतिरिक्तवृत्तित्वादिकमवच्छेदकत्वादिकम् – इति चेत् । अन्यत्रास्तु यथा तथा , शुक्तिनिरूपिता तु न तादृशी रजतत्वे , सर्वात्मकतापत्तेरेव । तत् , इयमन्यथाख्यातिः स्वीकृता शून्यतामापादयन्ती बौद्धानां गुप्तचरी तर्कह्रदनिमग्नानां गृहेषु प्रविष्टा – इति , अतो भेतव्यम् ।

एतेन – स्वाधिकरणावृत्तिनिष्ठप्रकारतानिरूपितविशेष्यताऽनिरूपकत्वं प्रमात्वम् । विशेष्यताविशिष्टप्रकारताशून्यत्वं सर्वांशे प्रमात्वम् । विशेष्यतावैशिष्ट्यं च स्वनिरूपितत्व-स्वाश्रयनिष्ठाधिकरणतानिरूपकताविशिष्टान्यत्वोभयसम्बन्धेन , निरूपकतावैशिष्ट्यं च स्वावच्छेदकसम्बन्धावच्छिन्नत्व-स्वसामानाधिकरण्य-स्वानवच्छेदकानवच्छिन्नत्व-स्ववृत्तित्वैतच्चतुष्टयसम्बन्धेन , स्ववृत्तित्वं च स्वानवच्छेदकानवच्छिन्नत्वसम्बन्धेन – इत्यादि लक्षणजालम् – अपास्तम् । तादृशभ्रान्तिलक्षणघटितत्वात् , उक्तदोषादनिर्मोकात् , स्वरूपसम्बन्धविशेषादिरूपविषयतायां उक्तरीत्या खण्डनेन च खण्डनीयम् – इति दिक् ।

नन्वस्ति महीयसि भिदा शून्यवादिपक्षान्मदीये पक्षे । अन्यत्र रजतत्वस्य सत्त्वाभ्युपगमात् । - इति चेत् । सोऽपि न भ्रान्तिगोचराणां सर्वेषामन्यत्र सांवृतं सत्त्वं पराचष्टे । मया तु पारमार्थिकं सत्त्वमालम्बि – इति चेत् । न तन्निर्वोढुं क्षम्यत – इति वक्ष्यते । भवतु वा , अन्यत्र सत्त्वेन प्रकृते पुरोवर्त्तिनि किमुपाकारि , यदभिहितं त्वदीयैरेव जयन्तभट्टैः –

अथान्यदेशकालं तदस्त्येवेत्यभिधीयते ।

इहासन्निहितस्यास्य तेन सत्त्वेन को गुणः ॥

- इति ।

अयमेव तस्यान्यत्र सत्त्वे विशेषो यददोऽनुभूतमिति चेत् । तत्किं शून्यवादिनान्यत्र रजतादिकं नानुभूयते । अन्यत्रानुभवोऽपि च प्रकृतापरोक्षानुभवस्य किमुपकुर्यात् । इन्द्रियसहकारिसंस्कारसम्पादकत्वमेवोपकार इति चेत् । तत्किं प्राभाकरैः शिक्षितोऽसि येन संस्कारजन्यां स्मृतिमुपजिगमिषसि । नैवं , ज्ञानलक्षणसन्निकर्षेण प्रत्यासीदद्रजतादि अलौकिकप्रत्यक्षविषयतामाश्रयति – इति

मामभिसन्धिः – इति चेत् । अहो स्वदर्शनवपुर्निगूहनोपायताभिज्ञताचातुरी तव प्रतारणादोषभीतिमप्यत्यजो यया । भवतु वा , क्व न्वियं ज्ञानलक्षणा प्रत्यासत्तिः । तर्ककटाक्षैरपरिचिता सा दूनमनाः तानवमातन्वती निजप्राणेभ्योऽपि जलाञ्जलिं विततार – इति किंवदन्ती श्रवणातिथिरस्माकं चिरादभूत् । तत्किमियं न सत्या । सत्यैव , तत्प्रमाण(प्राण)त्यागस्य सोपपत्तिकत्वात् ।

तथा हि , सत्यरजते इदं रजतम् – इति ज्ञानात् , इदं रजतम् – इति भ्रान्तेर्न कमपि विशेषमाकलयामो येनैकस्य लौलि(कि)कसन्निकर्षजन्यत्वं द्वितीयस्य चालौलि(कि)कसन्निकर्षजन्यत्वं स्वीकुर्याम । सामग्रीविशषे सति कार्येऽपि विशेषेण भाव्यमेव । कार्यगतविशेषाभावाच्च न सामग्रीगतोऽप्यस्ति विशेष – इति निश्चिनुमहे । सामग्रीवैषम्यात् , तत्कल्पनीयम् – इति चेत् । अन्योन्याश्रयगर्त्तपतितः कथमुत्सारणीयस्याः । सति सामग्रीविषमभावे कार्यविषमभावः , सति कार्यविषमभावे सामग्रीविषमभाव – इति ।

ननु यथा सुरभि चन्दनम् – इत्यत्र चाक्षुषप्रत्यक्षे सौरभांशे चक्षुषोऽयोग्यत्वात् , संयुक्तसमवायेन च प्रत्यक्षताभ्युपगतौ रसादिग्रहणस्यापि तेनापत्तेरतिप्रसञ्जकत्वात् , ज्ञानेनैव तत्सन्निधाप्यते – इति वाच्यम् । एवञ्च , सौरभांशेऽलौकिकमपि चन्दनांशे लौकिकत्वात् , लौकिकमिवानुभूयते । तथा प्रस्तुतेऽपि रजतेन सममन्यप्रत्यासत्त्यभावेन ज्ञानेनैव तत्प्रत्यासाद्यते – इति तदेव प्रत्यासत्तिताभाग्भवति । स्वसंयुक्तमनस्संयुक्तात्मसमवेतज्ञानजन्यसंस्कारविषयत्वसम्बन्धेन च नयनमेव रजतेन सङ्गतम् – इति शब्दतत्यापि ज्ञानप्रत्यासत्तिरेव वर्ण्यते – इति चेत् ।

नूनमिदं 'स्वरूपव्याक्रियैव पराक्रिया' – इति न्यायविषयतां नातिवर्त्तते । तथापि च घ्राणनयनाभ्यां संयुक्ते सुरभिचन्दने वा , नयनमात्रसंयुक्ते वा सौरभांशे ज्ञानं प्रत्यासत्तयसि । आद्ये प्रत्यासत्तिद्वयेनैकमेव ज्ञानमभ्युपगम्यताम् । घ्राणनयने न सम्भूयैकज्ञानजनके , परस्परनिरपेक्षकारणत्वात् , चक्षुःश्रोत्रवत् – इत्यनुमानं तु नोदेतुमर्हति । अयं घटपदाभिलप्य – इत्यङ्गुलिनिर्देशपुरस्सरशब्दश्रुत्यनन्तरं चक्षुःश्रोत्राभ्यामेकस्यैव ज्ञानस्य जननात् , दृष्टान्ते साधनवैकल्यात् । न च चाक्षुषत्वघ्रातित्वयोः साङ्कर्यम् – इति वाच्यम् । तयोरुपाधित्वेन जातित्वाभावात् । नव्यैस्साङ्कर्यस्य जातित्वबाधकतानङ्गीकाराच्च । यज्ज्ञानं यदिन्द्रियविशेष्यसन्निकर्षप्रसूतं भवति , तत्तदिन्द्रियप्रयुक्तजातिं भजति – इति नियतौ च सुरभि चन्दनम् – इति ज्ञानं चाक्षुषचन्दनविशेष्यकत्वात् , चाक्षुषत्ववदस्तु , चन्दने सौरभम् – इति घ्रेयविशेष्यकत्वात् , घ्रातित्ववदस्तु । तथा च , जातिसाङ्कर्यं न शक्यशङ्कमपि । यदि च नयनमात्रसंयुक्ते ज्ञानं प्रत्यासत्तिपदवीमधिरोहयसि , तदापि किं सौरभं पूर्वं घ्रातं न वा । यदि घ्रातं , तदा प्रत्यभिज्ञैव 'तदेव सुरभिचन्दनम्' – इत्याकारतया भूयताम् , तथैवानुभवात् । यदि न घ्रातं , तदा 'इदं चन्दनम्' – इत्येव कथं निराधारि । अन्यकाष्ठानामपि तत्सदृशसंस्थानाश्रयत्वात् । यदि च तच्छक्यनिश्चयमभिमनुषे , तदास्त्वनुमितिरेव , 'इदं काष्ठं सुरभिचन्दनत्वात्' – इत्याकृतिका ।

अपि च , ज्ञाने सन्निकर्षत्वालौकिकत्वरूपधर्मद्वयकल्पनामपेक्ष्य गुणग्रहार्थं क्लृप्ते संयुक्तसमवाये एवैकोऽलौकिको विशेषः कल्प्यताम् – इति लघीयसी कल्पना । तस्मात् , नास्ति तज्जीवने हेतुः । न केवलं साधकाभाव एव । बाधकमपि वरीवर्त्ति । तथा हि , साध्यस्य ज्ञानलक्षणप्रत्यासत्त्या , पक्षस्य च चक्षुरादिना प्रत्यक्षत्वात् , अनुमानप्रामाण्यमुच्छिद्येत । अतीन्द्रियपक्षकस्थलेपि मानसप्रत्यक्षसम्भवात् । न च – 'पृथिव्यां तदितरभेद' – इत्याद्यनुमितिस्थले साध्यप्रसिद्धेरनङ्गतया , तत्र ज्ञानलक्षणसन्निकर्षप्रयोजनाभावात् , नानुमितिमात्रमुच्छिनद्मि – इति वाच्यम् । तस्या अर्थापत्त्यन्तर्गतत्वात् । दीधितिकारादिभिरपि केवलान्वयिप्रकरणेऽमुष्यास्तत्रार्थापत्तावेवान्तर्भावाङ्गीकाराच्च ।

स्वामी शङ्करचैतन्यभारती

एवं सौरभं पश्यामि इति प्रतीत्यापत्त्यापि दुर्वचं प्रत्यासत्तिः । न च – दशधातुसमभिव्याहारे लौकिकविषयिताया द्वितीयार्थतां स्वीकृत्य उक्तापत्तिर्वारणीया – इति साम्प्रतम् । स्यादेवं , यदि ज्ञानस्य प्रत्यासत्तित्वसिद्धौ तदधीनज्ञानस्यालौकिकविषयित्वं सिध्येत् । न तु तदद्यापि सिद्धम् । तस्मात् , न ज्ञानप्रत्यासत्त्यालम्वनेनापि अन्यथाख्यातिः शक्योपपादा – इति सिद्धम् । तदमी शेमुषीणां कोषा एव तार्किका – इति त एव समालोचयन्तु – इति कृतमधिकेन ।

दोषालिङ्गितमिन्द्रियमेवान्यदेशस्थरजतमपरोक्षतया ग्रहीष्यति – इति दुर्भणितिः । तथा सति क्ष्मायां विलसत्कमलमपि नभसि नयनेन गोचरो विधीयेत दुष्टेन । अपि च रजतप्रत्यक्षत्वावच्छिन्नं प्रति तत्संयोगस्यैव कारणता निरचायि । रजतलौकिकप्रमात्मकप्रत्यक्षतयैवावच्छित्तिं गता रजतसंयोगत्वावच्छिन्नकारणतानिरूपितकार्यता , न पुनरलौकिकप्रत्यक्षतया – इति भेदभणित(ति)स्तु श्रद्दधानानां विनेयानामेव चेतं(तां)सि रञ्जयेत् । गौरवकारिणी निर्विकल्पाव्यापिनी चैषा न शुश्रूषयापि गोचरीक्रियते । न खलु निर्विकल्पमपि ज्ञानं तत्प्रकारकत्वघटितप्रमात्ववत् , येनोक्तकार्यतावच्छेदकं तत्रापि वर्त्तेत । रजतसंयोगकार्यतायास्तु तत्र विद्यमानत्वात् , कार्यतान्यूनवृत्तत्वात् , न तस्या अवच्छेदकत्वम् ।

तस्मात् , अत्रैव रजतं वर्त्तेत(र्त्तते - शुद्धपाठः) इत्यकामेनाप्यभ्युपेयम् । ननु त्वन्मतेपि रजतस्य ज्ञातसत्ताकतया सन्निकर्षासम्भवात् , कथं प्रत्यक्षता – इति चेत् । न । तत्तद्दोषसंस्क(का)रादिसहकृताविद्याया भ्रमोपादानत्वात् , चाक्षुषाद्युपादानत्वस्य मनस्येव स्वीकारात् , न भ्रमस्य चाक्षुषादिरूपत्वं प्रामाणिकम् । एवञ्च , अधिष्ठानचाक्षुषादौ भ्रमस्य तादात्म्याध्यासादेव भ्रमे चाक्षुषत्वाध्यासात् , चाक्षुषादिविषये च भ्रमविषयस्याध्यासात् , रजतं पश्यामि – इत्यादिप्रतीतय उपपद्यन्ते – इति न कोऽपि दोषः ।

व्यावहारिकरजतप्रत्यक्षत्वावच्छिन्नं प्रति तत्संयोगत्वेन कारणतास्वीकारे तु नोक्तशङ्कासमुन्मेषोऽपि । व्यावहारिकस्थले ह्यसौ कार्यकारणभावः क्लृप्तः । न च – एवं प्रमास्थले एवोक्तकार्यकारणभावस्य कल्पनेन प्रमात्मकप्रत्यक्षमेव तादृशसंयोगकार्यतावच्छेदकमस्तु -इति शङ्कनीयम् । निर्विकल्पकाव्याप्त्या दत्तोत्तरत्वात् । मन्नये प्रातिभासिकस्य तस्य साक्षिभास्यत्वेन प्रत्यक्षत्वाभावेऽपि क्षत्यभावाच्च । तच्च प्रातिभासिकम् । हट्टस्थरजतादिदमेव तस्य वैलक्षण्यं यत्तद्ब्रह्मज्ञानात्पूर्वमेव वाध्यत इयं शुक्तिः इति ज्ञानेन । स्वविषयशूराणि हि ज्ञानानि । इदं रजतमहं जानामि इत्यनुसन्धानवलाद्यादृशं तद्भ्रमेणावगाह्यते , तादृशमेव स्वीक्रियते । तच्चानिर्वचनीयमज्ञानपरिणाम्युपादानकम् , अन्यस्य कारणस्य तत्रावर्त्तमानत्वात् । तच्च तेनेमवच्छिन्नचित्येवोत्पाद्यते , अध्यस्तस्याधिष्ठाने एव कल्पनास्वीकृत्यौचित्यात् , जडस्य च स्वयं वाध्यत्वेनाध्यस्तत्वेनाधिष्ठानतासम्भवात् । फलवलेन चात्यन्ताभावज्ञानसामग्र्या वलवत्त्वोपगमात् , अत्यन्ताभाव एव ज्ञानविषयो भवति रजतस्य , रजतमुत्पन्नं विनष्टञ्च इति प्रतीतिश्च न जायते । रजतमहं पश्यामि मिथ्यैव मम रजतमभात् – इत्यादिप्रतीतिवा(व)लात् सिद्धोत्पत्त्यादिकमपि रजतमत्यन्ताभावप्रतियोगितयैव गोचरीक्रियते । अत्यन्ताभावस्य विरोधस्तु प्रागभावप्रध्वंसाभ्यां नव्यैरिव नैयायिकैरस्माभिरपि नाङ्गीक्रियते ।

तत्रायं सङ्क्षिप्तो राद्धान्तस्य पन्थाः ।

कदाचिदपि संशयव्यतिरेकप्र(भ्र)माद्यविषयत्वाज्ज्ञानस्य स्वप्रकाशत्वसिद्धौ स एवात्मा नित्यानन्दात्मकः शून्यनिराकृतियुक्तिभिः ; 'ज्ञानं नित्यमेकं च , उपाधिपरामर्शमन्तरेणाविभाव्यमानभेदत्वात् , परमते गगनवत्' – इत्यनुमानेन चोत्पत्तिविनाशप्रतीतेरवश्यकल्प्यविषयसम्वन्धोत्पत्तिविनाशविषयतयैवोपपत्त्याऽप्रयोजकताशून्येन ; श्रुत्यादिभिश्चाभ्युपेयते । अन्यथा , तस्यानुभवान्यत्वे दृश्यत्वेन मिथ्यात्वे शून्यवादः प्रसज्येतैव । तच्चाद्वैतं , प्रमाणमूर्द्धाभिषिक्तया श्रुत्या तथैवाधिगमात् ।

स्वामी शङ्करचैतन्यभारती

स्वप्रकाशानन्दाद्वैतचैतन्यरूपत्वमेव तदीयं सत्त्वम् । द्वैताद्वैतपक्षपातं परित्यज्य समालोचनेऽपि च सुषुप्तौ समाधौ विषयसंस्पृष्टानन्दानुभवसमये वा तत्कस्य न चकास्ति । सूक्ष्मं तत्त्वं निश्चेतुकामानां च जनानां समाहितमेव मनस्तस्मिन्विज्ञानजलधौ क्षणमपि लीनमद्वैतात्मकतां गतमिव तत्तत्त्वं निर्णेतुं प्रभवति , नान्यथा – इति त एव जानन्ति । सेयमद्वैतावस्था कस्य नामानन्दं नावहति । यदाह श्रुतिः – 'द्वितीयाद्वै भे(भ)यं भवति' , 'आनन्दं ब्रह्मणो विद्वान्न बिभेति कदाचन' – इति । तदिदमद्वैतं व्यपगतपाप्मसंस्पर्शैः शान्तसमीहितचेतोभिरित्थमनुभवगोचरीक्रियमाणं प्रत्यक्षसिद्धं पुरुषार्थमेव । तदिदं शेमुषीरमणैर्न कदाप्यवहेलनीयम् । यथाहुः –

धीधना बाधनायास्यास्तदा प्रज्ञां प्रयच्छथ ।

क्षेप्तुं चिन्तामणिं पाणिलब्धमब्धौ यदीच्छथ ॥

सिद्धे चास्मिन्सर्वविद्वदभ्यर्थनीये परस्मिन्पुरुषार्थेऽद्वैतेऽन्यत्किमपि न परमार्थतः स्वीक्रियामर्हति , अद्वैतव्याहतेरेव । प्रत्यक्षादिसिद्धश्चानृतनिकुरुम्बोऽभ्युपेयमानोऽपि न काञ्चित्क्षतिमावहति । अनृतानां सहस्रैरपि परमार्थतोऽद्वैताव्याघातात् । यदाहुः –

न भूमिरूपरवती मृगतृट्जलवाहिनीं सरितमुद्वहति ।

मृगवारिपूरपरिवारवती न नदी तथोषरभुवं स्पृशति ॥

एवञ्च दृश्यमानोऽयमनृतनिवहः कुतः कथं किमर्थञ्च प्रादुरासीत् – इति विचारणा समुन्मिषति । नो खलु तस्माद्विगतसकलकलङ्कान्निर्मृष्टाखिलक्रियाकारकफलभावाच्चिदानन्दवपुषोऽद्वैततत्त्वात्किमप्युत्पत्तुमीशीत । न चायमनुत्पन्न एव , परिणामित्वात् । नापि च ब्रह्मान्यत्किमपि स्वीकृत्य सत्यं तस्मादेवैतदुदपद्यतेति निर्णेतुं पारयामः , अद्वैतव्यवस्थितेरेव । तदेवं विविधसंशयाप्लुतचेतसमुद्दिश्य मातरन्ती तत्रभवन्ती श्रुतिर्बोधयितुं प्रावर्त्तत – 'तस्मादानन्दादेव खल्विमानि भूतानि समुत्पद्यन्ते' – इत्यादिका । कथञ्चासावद्वैततत्परापि द्वैतजनिं तस्मादेव वर्णयेत् । न च तदप्यनित्यमित्यावेदितं , येन तदेव परिणमेत । न च श्रुतिबलाद्ब्रह्मणि परिणामित्वं नित्यत्वञ्चोभयमप्यास्थेयं , युक्तिविरुद्धार्थस्य शतैरपि श्रुतीनामुपपादयितुमशक्यत्वात् ।

तदित्थं श्रुत्यर्थं निरूपयद्भिर्मीमांसामांसलवैदुषीभिरित्थं श्रुतिहेतुकार्थापत्त्या निरणायि –

चित्रायागः पशुफल इति श्रूयमाणेऽपि चित्राऽ–

पूर्वद्वारं पशुफलतयाऽऽक्षिप्यते तत्र तद्वत् ।

चैतन्यात्मा जगदुदयकृच्छ्रूयतेऽत्रापि पश्चान्-

मायादीनां भवति जगति द्वारभावः फलेऽस्मिन् ॥

अस्ति काचिच्छक्तिर्मायादिपदव्यपदेश्याऽघटितघटनापटीयसी , यां द्वारीकृत्य व्यावर्त्ततादो ब्रह्म । श्रुतिरपि च तादृशैश्शब्दैस्तां निरदिशत् – 'मायां तु प्रकृतिं विद्यान्मायिनञ्च महेश्वरम्' , 'अहरहर्गच्छन्तोऽपि च तमात्मानं न विदुरनृतेन प्रत्यूढा' , 'तुच्छेनाभ्वपिहितं यदासीत्' , 'नीहारेण प्रावृताः' – इत्यादिका । तस्या आच्छादकत्वादिश्रवणादेव च न सादृष्टमेवेति भणितिश्शोभते ।

अत एव च सा भावरूपा । आहुश्च –

नाभावतास्य घटते वरणात्मकत्वात्

नाभावमावरणमाहुरभावशौण्डाः ।

अज्ञानमावरणमाह च वासुदेवः

स्वामी शङ्करचैतन्यभारती

तद्भावरूपमिति तेन वयं प्रतीमः ॥

वासुदेव इति । अज्ञानेनावृतं ज्ञानम् – इति वचसा । परिपूर्णचिदानन्दस्य च सकलजनानुभवानधिरोहणान्यथानुपपत्त्या तामुपयन्ति ।

अत एव केषाञ्चित्परिदेवनमिदं –



सुखापाद्युत्थिताश्चैवं निर्विद्यन्ते हि कामुकाः ।

वृथेयमन्तरेणैव कामिनीं यामिनी गता ॥

आश्लिष्टामप्यवुद्ध्वैनां मृतवच्छायितं मया ।

भुक्त्वा च परमानन्दं तस्य च स्मरणादयम् ॥

स्वल्पाल्पसुखहान्यैवं निर्वेदो नावकल्पते ।

तत्सुखं विस्मृतं चेत्स्यात्सुखमस्वाप्समित्ययम् ॥

व्यवहारो न युज्येत दुःखाननुभवे त्वियम् ।

सुखव्यवहृतिस्तस्माद्गौणवृत्त्येति निश्चयः ॥

अनवसर एव । कः परिपूर्णापरिच्छिन्नानन्दानुभवं सुषुप्तावुपेयाय । (?) अज्ञानाच्छन्नो ह्यानन्दस्तत्रानुभूतिगोचरः ।

ऊचिरे आचार्याः –

अप्यानन्दः श्रुतः साक्षान्मानेनाविषयीकृतः ।

विषयानन्दाभिलाषं स न मन्दीकर्त्तुमप्यलम् ॥

-इति ।

भ्रमोपादानतान्यथानुपपत्तिरपि च तस्याः साधने सफलमेव प्रायतिष्ट । उपरिष्टात्स्फुटीभविष्यति चैतत् ।

एवं , 'विमतं प्रमाणज्ञानं स्वप्रागभावव्यतिरिक्तस्वविषयावरणस्वनिवर्त्त्यस्वदेशगतवस्त्वन्तरपूर्वकम् , अप्रकाशितार्थप्रकाशकत्वात् , अन्धकारे प्रथमोत्पन्नप्रदीपप्रभावत्' , 'देवदत्तप्रमा स्वप्रागभावव्यतिरिक्तानादिनिवर्त्तिका , प्रमात्वात् , यज्ञदत्तप्रमावत्' , 'विमता प्रमा , स्वाभावातिरिक्तानादिप्रध्वंसिनी , कार्यत्वात् , घटवत्' – इत्यादिमहाविद्यानुमानशतैश्च साललम्वे ।

'त्वदुक्तमर्थं न जानामि' -- इत्यादिप्रत्यक्षमपि न तां विना निर्वहति , सति त्वदुक्तार्थज्ञाने ज्ञानसत्त्वादेवासति च प्रतियोग्यज्ञानादेवोक्तव्यवहारानुपपत्तेः । सेयं सिद्ध्यसिद्धिभ्यां व्याहतिर्व्यपदिश्यते । सामान्यतो ज्ञातत्वे विशेषतोऽज्ञातत्वेपि नेयं व्यवहृतिर्निर्वहेत(त) । ज्ञातेंशे ज्ञातत्वादेव 'न जानामि' – इति व्यवहारानुपपत्तेः , अज्ञाते चाज्ञातत्वादेव प्रश्नानुपपत्तेः । 'त्वदुक्तेऽर्थे मम प्रमाणज्ञानं नास्ति' – इत्येवं तामर्थापयन्नपि चानुभवमन्यथयन्न तामुपपादयितुं क्षमते । यतस्तदाकारस्य प्रमाणज्ञानस्यैव तत्र सत्त्वात् । अत एव च , 'एतदतिरिक्तं प्रमाणज्ञानं मम नास्ति' – इत्युक्तावपि व्यवघात एव । तस्य तदाकारस्यैव सत्त्वादेव । अत एव , अभावज्ञाने प्रतियोगिज्ञानकारणतानभ्युपगमेपि न निस्तारः । न च – भवन्मतेपि साक्षिरूपज्ञानविषयत्वस्याज्ञानावच्छेदकतया विषयेऽपि सत्त्वात् कथं , 'न जानामि' इति व्यवहार - इति वाच्यम् । सर्वसाधकत्वेनैव साक्षिणो धर्मिग्राहकमानसिद्धत्वात् । तथा हि , अज्ञातो घटोऽस्ति इति कथं निश्चेयम् । प्रत्यक्षानुमानादिभिर्निश्चेयत्वेऽज्ञातत्वमेव व्याहतिकवलितम् । निश्चयस्तु तस्यावश्यकः , अन्यथा 'ज्ञानकाले एव

घट उत्पद्यते' – इत्यत्र किमुत्तरम् । तस्मात् , साक्षिणैवाज्ञानावच्छेदकतया सोऽनुभूयते – इति , नाज्ञानविरोधी साक्षी , किन्तु , प्रकाशक एव – इति । दृष्टिसृष्टिवादेऽपि घटपटादिभ्रमाणामज्ञानादेश्च द(द्र)ष्टृत्वेनावश्यकल्प्य – इति ।

अपि च , प्रत्यक्षं प्रति विषयस्य कारणत्वात् , कार्यकारणभावग्रहार्थमपि घटस्य पूर्वं सिद्धिरपेक्षिता । स्वासमानकालीनाज्ञातताविशिष्टघटादिविषयकज्ञानस्य सम्भवेऽप्यज्ञातत्वविशिष्टघटादिनिष्ठकारणतायां नोपयोग – इति , स्वसमानकालिकाज्ञातताविशिष्टघटादिसिद्धये साक्षी शरणीकरणीय – इति , न तस्याज्ञानविरोधित्वम् ।



सेयं माया न सत्या , उक्तयुक्तेः । 'भूयश्चान्ते विश्वमायानिवृत्तिः' – इति तन्निवृत्तिप्रतियोगित्वश्रुतेश्च । नापि शशशृङ्गायमाणा , उक्तप्रमाणसिद्धत्वादेव । अत एव , 'तुच्छेनाभ्वपिहितम्' – इतिश्रुतिगततुच्छशब्दः सद्भिन्नत्वसादृश्येन गौण एव तस्याम् । तत् , इयमनिर्वचनीयोभयविलक्षणा । अत एव च , तां श्रुतिः 'अनृतेन प्रत्यूढा' – इत्यत्रानृतशब्देन व्यपादीदिशत् । ब्रह्मसत्त्वमुपदिश्य च 'नासदासीन्न सदासीत्' – इति च सदसद्विलक्षणं वस्त्वचिकीर्तत् । सदसत्त्वे किञ्चिन्निष्ठात्यन्ताभावप्रतियोगिनी , धर्मत्वात् , रूपरसवत् – इत्यनुमानं च सामान्यतस्तामालम्बते । स्वप्रकारकधीविशेष्ये वाध्यत्वं वा , सद्भिन्नत्वे सत्यसद्भिन्नत्वे सति सदसदुभयभिन्नत्वम् – इति च तत्रानिर्वाच्यत्वम् । सेयमेव शुद्धब्रह्मविषयत्वेन माया , स्वकार्यावच्छिन्नब्रह्मविषयत्वेन चाविद्या – इति व्यय(प)देशमश्नुवती द्वितयतां गता – इति । इदन्तु तत्त्वमुपाववर्णन्नारायणसरस्वतीपादाः –

भिन्ना यद्यपि नाविद्या मायातो वस्तुतः क्वचित्

तथापि गुणवैषम्यात्तयोर्नाम विकल्प्यते ॥

सत्त्वात्मिका तु मायाख्यां लभते कार्यगौरवात् ।

स्वाश्रयामोहहेतुत्वात्सार्वज्ञ्यादिगुणार्पणात् ॥

स्वाश्रये , सैव तमसा रजसा च स्वमाश्रयम् ।

मोहयन्ती त्वसार्वज्ञ्यदुःखित्वादिगुणार्पणात् ॥

अविद्याख्यां च लभते , नातो भेदस्तयोः क्वचित् ।

मायाविद्याविभागेन शिरोराहुविभागवत् ॥

विषयाश्रययोस्तस्या भवेद्भेदविकल्पनम् ।

परमार्थतस्तु नैवास्ति भेदश्चिन्मात्रतः स्वतः ॥

जीवाश्रया ब्रह्मपदा त्वविद्या तत्त्वविन्मता ।

ब्रह्माश्रया जीवपदा माया सैव प्रकीर्त्तिता ॥

विमता माया समानाश्रयविषयिका , तमश्शब्दवाच्यत्वात् , सम्मततमोवत् – इत्यनुमानेन च सा समानाश्रयविषयिका – इति न्यरूरूपन् । आस्तां यथाकथञ्चिदेषा ब्रह्मधवा । विरक्तचित्तैरात्मारामैर्न बहुधा विचार्यतामर्हति । यदभ्यधात् –

कार्यं चेदवगम्येत किं कारणपरीक्षया ।

कार्यं चेन्नावगम्येत किं कारणपरीक्षया ॥

-इति जयन्तभट्टः ।

तदियं माया ब्रह्मणेदं दृश्यमानं विविधं जगदजीजनच्चराचरात्मकं ब्रह्माध्यासमापन्नम् ।

ब्रह्मणि च सामान्यतो ज्ञातत्वे सति विशेषतोऽज्ञातत्वमधिष्ठानत्वम् । अज्ञाततां चैषैव समपीपदत् । सत्यानृततादात्म्यभावश्चायमध्यासः । स च दृग्दृश्ययोरतिवैपरीत्यं गतयोरपि प्रतीयमानतादात्म्यान्यथानुपपत्त्या कल्प्यते । तत्र ब्रह्मैव सत्यमधिष्ठानम् , अनुस्यूतत्वात् , पूर्वाभिहितयुक्तेश्च । तदन्यदनृतम् । अन्यस्य सर्वस्याध्यासमुपपादयन्ती चासौ माया स्वाध्यासे नान्यदपेक्षते – इति कल्प्यते मा भूदनवस्था – इति । बभणुश्च –



भेदं च भेद्यं च भिनत्ति भेदो

यथैव भेदान्तरमन्तरेण ।

मोहं च कार्यं च विभर्त्ति मोहः

तथैव मोहान्तरमन्तरेण ॥

तेनानेन पदपदार्थकदम्बेनोपादानमेवानुगन्तव्यमुपादेयेन प्रपञ्चेन – इत्याविद्यकं मायिकमनिर्वाच्यं चोच्यते । किमर्थमेतेनोदपादि , किमिति चानन्दजलधिरपि दुःखजलधीयति , किमिति च चेतनोऽपि मुग्ध इव स्वयमेव ववन्धात्मानमेव – इत्यादि प्रश्ननिवहमपि सैव माया लोकोत्तरचमत्कारिणी उत्तरीतुं पारयति स्वीकृता सती । न वयमन्यदार्शनिका इवास्दुत्तरैर्जिज्ञासून्प्रतारयामः । यादृशं हि वस्तुसतत्त्वं निरीक्ष्यते , तदेवाभिधीयते । आरोपे सति निमित्तानुसरणम् – इति नीतिमालम्बमानैश्च कारणममि(नि)र्वाच्यमेवास्म(मा)भिरकल्पि ।

यत्रोक्तं श्रीगौडपादाचार्यैः –

क्रीडार्थं सृष्टिरित्यन्ये भोगार्थमिति चापरे ।

देवस्यैष स्वभावोऽयमात्मकामस्य का स्पृहा ॥

स्वभावा(व) इत्यविद्येति ।

तामिमामाचार्योक्तिं निशम्य न कस्य मनः शाम्यति । निष्पक्षपातं वस्तुस्वभाववर्णनपरमिदं वचो वस्तुतत्त्वमनुभूतिपथमवतार्यैवाचार्येण निरटङ्कि – इति न कस्य शममावहेत् । अहो धन्यानि धन्यानां महात्मनां वचांसि । न परमस्मदीया आर्याचार्या एवास्मानित्थं सद्वचोभिः शान्तयन्ति । श्रुतिरपि भगवती विचारगहनाम्बुधावस्मिन्निमज्ज्येत्थमेवालासीदृग्वेदीया –

न सदासीन्नासदासीत्तदानीं नासीद्रजो न व्योम परो यत् ।

किमावरीवः कुह कस्य शर्मन्नम्भः किमासीद्गहनं गभीरम् ॥

को अद्धा वेद क इह प्रवोचत्कुत आजातः कुत इयं विसृष्टिः ।

अर्वाग्देवा अस्य विसर्जनेनाथ(?) को वेद यत आवभूव ॥

इयं विसृष्टिर्यत आवभूव यदि वा दधे यदि वा न ।

योऽस्याध्यक्षः परमे व्योमन्सोऽङ्ग वेद यदि वा न वेद ॥ (८।७।१६।२२)

इत्थमभिव्यक्ततयाप्यनिर्वाच्यवादे श्रुत्या ख्याप्यमाने यदि न कश्चिच्छ्रद्दध्यात्तदास्माभिः किं कर्त्तव्यम् । मन्दभाग्यमेव तस्य तत्र हेतुः । यदाहुः –

ईश्वरानुग्रहादेषा पुंसामद्वैतवासना ।

महाभयकृतत्राणा द्वित्राणां यदि जायते ॥

-इति । अभ्यधाच्च परनिरुक्त्यभिमाननिराकरणपटीयान् श्रीहर्षः –

मम चानिर्वचनीयतैव सर्वप्रतीतिव्यवहारव्यवस्थितिपर्यनुयोगवाणवारणाय वज्रवारवा(चा)णाया(य)माना विजयते । 

-इति ।

समस्तलोकशास्त्रैकमत्यमाश्रित्य नृत्यतोः ।

का तदस्तु गतिस्तत्तद्वस्तुधीव्यवहारयोः ॥

उपपादयितुं तैस्तैर्मतैरशकनीययोः ।

अनिर्वक्तव्यतावादपादसेवा गतिस्तयोः ॥

-इति च ।

एतादृशानिर्वाच्यप्रपञ्चान्तर्गतश्चेदमचारुतरं कलेवरम् । तत्परिमितमेव तत्रास्ति मनः । तच्चानित्यं , परिच्छित्त्यालिङ्गितत्वात् , घटादिवत् । तैजसत्वञ्च तस्य तत्कार्यमवलोक्य स्वीकृतम् । यथा हि प्रदीपो वा चक्षुर्वा दूरस्थकलशाद्यात्मना परिणमते , एवं मनोऽपि । इन्द्रियद्वारा च तदिन्द्रियसंयुक्तमेव विषयं व्याप्य तदाकारं भवति । सैव वृत्तिरिति कथ्यते । तन्निर्गमश्च पारोक्ष्याप(पा)रोक्ष्यव्यवस्थार्थं स्वीकृतः । वृत्तिनिर्गमास्वीकारेऽपि विषयेन्द्रियसन्निकर्षादिनैवापरोक्षत्वोपपत्तावपि तेनैव च विषयावच्छिन्नचैतन्यस्याभिव्यक्तिकल्पनादिना सर्वसामञ्जस्येपि प्रभारूपतेजसो विपयसन्निकर्षेणैव प्रकाशकत्वस्य दृष्टत्वात् तेजस्त्वेनैव हेतुनान्तःकरणे विषयसम्बन्धः प्राप्तो वृत्तिद्वारा सङ्गम्यते – इति वृत्तिनिर्गमो युक्तिसंस्पृष्ट एव । एवञ्च मनोवृत्तिनिर्गतिस्थले विषयापरोक्ष्यं तदनिर्गतिस्थले च पारोक्ष्यम् ।

आवरणनिवृत्तिश्च तदीयं कृत्यम् । आवरणञ्चाज्ञानरूपं न घटादौ समस्ति , तेषा जडत्वेनावरणात्मकतया तत्राज्ञानस्य निष्प्रयोजनत्वात् प्रकाशावारकत्वेन च तदीयं साफल्यम् – इति सर्वत्र चैतन्यमेवावृणोति तत् । ब्रह्मचैतन्यञ्च गगनमिव कोटरकुटीरादिभिरवच्छिन्नं वर्वर्ति घटादिभिस्सकलैर्विकल्पैः । एवञ्च सा वृत्तिर्घटाद्यवच्छिन्नचैतन्यगतावरणं निवर्तयति । निवृत्ते च तस्मिन् चैतन्येनैव घटस्स्फुरति । तथा च घटादीनां पूर्वं वर्त्तमानतया चिदवच्छेदकत्वसम्भवात् तदवच्छिन्नचैतन्यगतावरणस्य पूर्वं विद्यमानत्वात् तन्निवर्त्तकत्वस्य मनोवृत्तौ सम्भवेन तत्साफल्यम् । एवञ्च सर्वत्र तादृशचैतन्यविषयकत्वेनैव प्रमाणानां प्रामाण्यं न तु घटादिविषयकत्वेन । अत एव चाकथदिदं –

सर्वप्रत्ययवेद्येस्मिन्ब्रह्मरूपे व्यवस्थिते ।

-इति ।

सति चैवं 'इदं रजतम्' – इत्यादिस्थलेष्विदम्पदार्थस्य शुक्तेरपि व्यावहारिकतया ज्ञानात्पूर्वं वर्त्तमानतया चिदवच्छेदकत्वसम्भवाद् , इदमवच्छिन्नचिन्निष्ठामावृतिं भ(भु)नक्ति मनोवृत्तिः । रजतस्य तु प्रतीतिकालमात्रवृत्तिकतया ज्ञानात्पूर्वमविद्यमानतया चिदवच्छेदकत्वासम्भवात् , न तदवच्छिन्नचिन्निष्ठाज्ञानमस्ति । अत एव , प्रातीतिकं ज्ञातसत्ताकमेव – इति , अनावृतमेव – इति च व्यवहरन्ति । एतेनैवाभिप्रायेण देवदत्ताज्ञानविषयतावच्छेदकत्वपक्षिका विप्रतिपत्तिः प्राञ्चरूपि । रजतावच्छिन्नचिन्निष्ठाज्ञानासम्भवे च न मनोवृत्तिरपि तत्र प्रयोजनवती , अज्ञाननिवर्त्तकत्वेनैव तत्साफल्यस्य वर्णितत्वात् । रजतं चेदमवच्छिन्नचिन्निष्ठाज्ञानपरिणतिः । इदमवच्छिन्नचितश्च विवर्त्तः । सत्येवं , तदाविद्यकं रजतमपरोक्षप्रतीत्यन्यथानुपपत्त्या क्लृप्तोत्पत्तिकं केनापरोक्षीक्रियते – इति विचारणायां

,साक्षिणैव – इत्यभ्युपगम्यते । इदमेव हि साक्षित्वं यदनावृतविषयप्रकाशत्वं नाम । आविद्यकस्य चानावृतत्वं व्युदपादि पूर्वम् । अत एव च, मनोधर्मान्सुखादीन्स एव प्रकाशयति । अत एव च , तस्यानुव्यवसायस्थानापन्नत्वमपि सङ्गच्छते , मनोधर्मस्य ज्ञानस्य भास्कत्वादेव ।

अविद्योपहितचैतन्यं तद्वृत्त्युपहितचैतन्यं वा साक्षी । स चायं साक्षी व्यावहारिकान्पदार्थान्मनोवृत्तिं ज्ञानं द्वारीकृत्य विषयीकरोति , प्रतीतिमात्रशरीरांश्च पदार्थानविद्यावृत्तिं द्वारीकृत्य , अज्ञातांश्चाज्ञानं द्वारीकृत्य – इति ।



तदिदमुच्यते –

ज्ञाततयाऽज्ञाततया वा सर्वं साक्षिभास्यम् ।

-इति ।

अविद्यावृत्त्यादिभासने तु निरपेक्ष एवायम् । वृत्तिरूपद्वारान्तरापेक्षायां हि भवेदनवस्था – इति । व्यावहारिकपदार्थप्रकाशने त्ववश्यं मनोवृत्तिरपेक्षितव्या । नो चेत् , अविद्योपहितचैतन्यस्य साक्षिणः सर्वदा सत्त्वात् , सर्वस्य सार्वज्ञ्यमापतेत् । सुखादिप्रकाशने तु केचिदविद्यावृत्त्यपेक्षां मन्वते , केचिन्न – इत्यन्यदेतत् । तदित्थं सिद्धेयमविद्यावृत्ती रजतगोचरा – इति ।

अविद्यावृत्तिरियं रजतञ्च – इति रूपद्वयेनाविद्या युगपदेव परिणमते , न तु पूर्वं रजतरूपेण पश्चाच्च वृत्तिरूपेण मा भूद्रजतस्य प्रातीतिकत्वव्याहतिः – इति । तत्र च परिणामे सम्प्रयोगसंस्कारदोषान्निमित्ततयाऽपेक्षते । तत्राधिष्ठानतावच्छेदकेन शुक्त्यादिना साकं सम्प्रयोगः पूर्वं कथितः । स चावश्यमपेक्षणीयः । तं विना भ्रमस्यादृष्टत्वात् । संस्कारश्चाध्यस्यमानतावच्छेदकरजतत्वादिप्रकारकानुभवजन्योऽपेक्ष्य एव । न हि हट्टस्थरजतादौ तादृशानुभवं विना रजतत्वप्रकारकभ्रान्त्याश्रयो भवति कश्चित् , मा भूदतिप्रसक्तिः । दोषश्च रागादिः । तदनपेक्षणे हि रजततयैव किमिति भ्रान्तः , अन्यधर्मप्रकारको भ्रमोऽस्य किं न समजनि – इत्यादि पर्यनुयुज्येत । सादृश्यमपि केचिदध्यासहेतुतया स्वीकुर्वते , केचिन्न । तत्सम्भवन्न निवार्यते । यत्र च स्फुटं तस्य न प्रतीतिः , तत्र कुसृष्ट्या तत्कल्पनमपि न रोचयामहे ।

न च – एवं रजततज्ज्ञानयोर्युगपदुत्पत्तिस्वीकारेऽर्थाजन्यत्वाज्ज्ञानस्यापरोक्षत्वं न व्यवतिष्ठेत – इति वाच्यम् । ईश्वरज्ञाने योगिज्ञाने वा व्यभिचारात्, नार्थजन्यत्वं प्रत्यक्षत्वप्रयोजकम् । ज्ञानाकरणकज्ञानस्यापरोक्षत्वं प्रकृतेऽप्यस्ति – इति न दोषः ।

तदेवमर्थस्येदमवच्छिन्नचित्यध्यासोऽर्थाध्यासपदेन व्यपदिश्यते । तादृशचिदाकारमनोवृत्त्यवच्छिन्नचिति रजताकारवृत्तेस्तादात्म्याध्यासो ज्ञानाध्यासपदेन व्यवह्रियते । एवञ्च , मनोवृत्त्यविद्यावृत्त्योरपि तादात्म्याध्यासात् , नाख्यातिसाम्यमपि । इदमाकारवृत्तेः साक्षिवेद्यत्वेन तदवच्छिन्नाज्ञानाभावेऽपि इदंवृत्त्यवच्छिन्नचैतन्ये शुक्त्यवच्छिन्नचैतन्यगोचराज्ञानसत्त्वेन तन्निबन्धन एव ज्ञानाध्यास – इति । अविद्यावृत्तौ ज्ञानत्वास्वीकाराच्च न ज्ञानद्वयमादायाख्यातिसाम्यम् । अपि च , आवरणनाशरूपफलविशिष्टत्वेनेदमंशावच्छिन्ना चिदेव पूर्वाभिहितरीत्या फलं , न तु रजतावच्छिन्ना , तत्रावरणप्रसक्तेरेवाभावात् । एवञ्च , फलैक्याद्द्वयोरपि चिद्वृत्त्योरैक्येन व्यवहार – इति ध्येयम् । इयञ्चाध्यासस्य मुख्या भिदाद्वयी । अपरोऽस्या एव प्रभेद इति । केषुचिद्ग्रन्थेषु ज्ञानस्य ब्रह्मणोऽध्यस्तप्रतियोगिकतयाऽध्यास एव ज्ञानाध्यासशब्देन व्यवहृतः ; अर्थस्याध्यस्तस्य ब्रह्माभिन्नस्य स्वरूपेणाध्यासोऽर्थाध्यास – इति च व्यवजह्रुः । अमू च भेदौ संसर्गाध्यासपदेन स्वरूपाध्यासपदेन च व्यपदिष्टौ । एवं धर्माणामध्यासो धर्माध्यासतया , धर्मिणश्च स धर्म्यध्यासतया उल्लिखितौ – इत्येषा षडध्यासी । अपरञ्च प्रभेदं निरूपयामासुस्त्रैविध्येन – ज्ञानविशिष्टः , अज्ञानविशिष्टः , ज्ञानाज्ञानविशिष्टश्च – इति । तत्राद्यः

शुक्तिरजतादिभ्रमः , अविद्यावृत्त्या सहैवोत्पन्नत्वात् । वियदादेरध्यासो द्वितीयः , अज्ञानविशिष्टतया जातत्वात् । अज्ञानस्य चानादित्वेऽपि विशिष्टाकारेणोत्पत्तिर्बोध्या । ज्ञानाज्ञानविशिष्टभ्रमस्तु परोक्षस्थले एव । तत्र सामान्यतोऽनुमित्यादिरूपज्ञानस्य विशेषरूपेण चाज्ञानस्य विशेषविशिष्टतया जायमानत्वात् । परोक्षभ्रमानङ्गीकारे च भेदद्वयमेव – इति ।



न केवलं रजतादिभ्रमे ज्ञानरजतयोरेवोत्पत्तिः – इति मन्तव्यम् । विषयता अपि जायन्ते । तथा हि – इदमवच्छेदेन रजतं रजतविषयत्वं रजततादात्म्यं रजततादात्म्यविषयत्वम् – इति चत्वारि जायन्ते । रजतविषयतावच्छेदेनाप्येतान्येव । यस्य यदवच्छेदेनाध्यासः , तस्य तद्विषयत्वावच्छेदेनापि स – इति नियमात् । एतच्च 'इदं रजतं जानामि' – इत्यनुभवसाक्षिकम् । 'रजतमिदं जानामि' – इत्यनुभवस्थले तु रजतावच्छेदेन रजतविषयत्वावच्छेदेन च इदंतादात्म्यम् इदंतादात्म्यप्रतियोगित्वोपहितेदमादि इदंतादात्म्यविषयत्वम् इदंतादात्म्यप्रतियोगित्वोपहितेदमादिविषयत्वम् – इत्येतानि चत्वारि समुत्पद्यन्ते । तदेतत्सर्वमपरोक्षानुभवान्यथानुपपत्त्यैव कल्पितम् - इति , नात्र गौरवविभीषिका समुन्मिषति । यथाहुः --

प्रमाणवत्त्वादायातः प्रवाहः केन वार्यते ।

- इति ।

प्रमाणवन्त्यदृष्टानि कल्प्यानि सुबहून्यपि ।

अदृष्टशतभागोऽपि न कल्प्यो निष्प्रमाणकः ॥

- इति ।

न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ सृजते – इत्यादिश्रुतेरस्वप्नानिर्वाच्योत्पत्तौ प्रमाणत्वात् । सच्च त्यच्चाभवत् , सत्यञ्चानृतञ्च समभवत् – इति श्रुतौ च सत्यपदेन व्यावहारिकोत्पत्तिमभिधायानृतपदेन प्रातिभासिकोत्पत्तेरभिधानात् । तस्मात् , उदारहृदयैर्विहाय दारिद्र्यमेतत्स्वीकृतौ न सङ्कोचो लेशतोऽपि कार्य – इति ।

वस्तुतस्तु – नैयायिकमते दोषनिष्ठकारणतानिरूपितकार्यता रजतविषयकभ्रमत्वावच्छिन्ना । भ्रमत्वञ्च तदभाववति तत्प्रकारकत्वम् – इति कार्यतावच्छेदकतया बहूनां प्रवेश – इति महागौरवम् । अनिर्वाच्योत्पत्तिवादे तु सा कार्यता रजतत्वावच्छिन्ना – इति महल्लाघवम् । तादृशजन्यतायाः प्रातिभासिकव्यावहारिकसाधारणतया प्रातिभासिकत्वस्यापि जन्यतावच्छेदककोटावप्रवेशनीयत्वात् । एवम् , 'इदं रजतम्' – इति भ्रमं प्रति 'नेदं रजतम्' – इति बाधबुद्धेः प्रतिबन्धकत्वात् , तदभावस्य कारणत्वे वाच्ये , नैयायिकनये समवायसम्बन्धेनेदन्त्वावच्छिन्नविशेष्यतानिरूपिततादात्म्यनिष्ठसंसर्गतानिरूपितरजतत्वावच्छिन्नप्रकारताकचाक्षुषत्वावच्छिन्नं प्रति इदन्त्वावच्छिन्नानुयोगिताकरजतत्वावच्छिन्नप्रतियोगिताकभेदबुद्ध्याद्यभावस्य कारणत्वम् । वेदान्तिनये तु , इदन्त्वावच्छिन्नविशेष्यतानिरूपिततादात्म्यसंसर्गतानिरूपितस्वनिष्ठप्रकारताशालिचाक्षुषसमवायेन तादृशचाक्षुषसम्बन्धेन वा रजतत्वावच्छिन्नं प्रति तादृशबाधाभावस्य कारणत्वम् – इति , रजतत्वाद्यवच्छिन्नत्वस्य चाक्षुषीयसमवायस्य चानिवेशेन लाघवम् – इति , सूक्ष्मतममाचार्यैरद्वैतसिद्धान्तविद्योतने निरूपितम् – इति तत एव कणेहत्यावलोकनीयम् । द्वितीयकार्यकारणभावस्यायमाशयः – इदमवच्छिन्नचिति रजतस्योत्पत्तेः , तत्तादृशचाक्षुषसम्बन्धेन तत्र वर्त्तते । चाक्षुषस्य स्वोपादानावच्छिन्नत्वसम्बन्धेन प्रमातृवृत्तितया , प्रमातुश्चेदमवच्छिन्नचैतन्यैक्यमापन्नतया , इदमवच्छिन्नचैतन्यवृत्तित्वसम्भवः । एतेन – भेदग्रहरूपबाधाभावस्यापि तत्र वृत्तित्वं – व्याख्यातम् ।

स्वामी शङ्करचैतन्यभारती

चाक्षुषसमवायसम्वन्धत्यागे त्विदं वीजं – समवायेन चाक्षुषस्यान्तःकरणवृत्तितयेदमवच्छिन्नचैतन्ये प्रमात्रभिन्नेऽवृत्तित्वात् ; तादृशचाक्षुषसमवायेन रजतस्य तादृशचैतन्ये उत्पत्तेर्वक्तुमशक्यत्वात् , तादृशचाक्षुषोपादानावच्छिन्नत्वादिसम्वन्धेन तदुक्तौ गौरवात् । इदमादौ तदवच्छिन्नचितौ च विषयतादिना वृत्तिमतस्तादृशचाक्षुषस्य रजतवृत्तितावच्छेदकत्वसम्भवात् ।

न च – रजतत्वप्रकारकचाक्षुषस्यासम्भवः , तस्य सन्निकर्षजन्यत्वेन , सन्निकर्षं प्रति च सन्निकृष्टस्य कारणत्वेन , तस्य ज्ञातसत्ताकरजताजन्यत्वात् तदसम्भवात् – इति वाच्यम् । साक्षिभास्यतया प्रथमक्षणस्थेन द्वितीयक्षणे इन्द्रियसन्निकर्षे सति तृतीयक्षणवृत्तिचाक्षुषविषयत्वसम्भवात् । न च – द्वितीये तृतीये वा क्षणे सति वाधे सन्निकर्षवाचोयुक्तेरसम्भव – इति वाच्यम् । अधिष्ठानतावच्छेदकेदमादिगतचाक्षुषत्वस्यैव रजतादौ प्रतीतेरभ्युपगमात् , न दोषः । निरूपितञ्चैतत्प्राक् ।

'यदुत्कर्षापकर्षौ यदुत्कर्षापकर्षानुविधायिनौ तस्य तत्कार्यत्वम्' – इति न्यायात् , शङ्खपीतिमोत्कर्षापकर्षयोश्च पित्तोत्कर्षापकर्षानुविधायित्वदर्शनात् , शङ्खपीतिम्नः पित्तजन्यत्वं वाच्यम् । एवमन्यत्रापि तत्तद्धर्मे वोध्यम् – इति सिद्धाऽनिर्वाच्योत्पत्तिः । न च – तत्र शङ्खपीतिमज्ञानोत्कर्षो , न तु विषयोत्कर्ष – इति वाच्यम् । साकारवादप्रसङ्गेन वहिर्विषयापलापापत्त्या ज्ञाने स्वतः एवोत्कर्षस्य वक्तुमशक्यत्वेन , विषयोत्कर्षध्रौव्यात् । न च – जपाकुसुमसान्निध्ये स्फटिके लौहित्यान्यथाख्यातिस्वीकारवत् , चक्षुर्द्वारा(रा) शङ्खसंलग्नपित्तगतपीतिम्नः सन्निहितस्यारोपाभ्युपगमोऽस्तु ; किं तदुत्पत्तिस्वीकारेण – इति वाच्यम् । तथा सति सर्वोऽपि शङ्खसंयुक्तेन्द्रियो जनः शङ्खं पीतत्वेन प्रतीयात् । न च – उत्पत्तिस्वीकारेऽप्ययं प्रसङ्ग – इति वाच्यम् । यस्याविद्यावृत्तिसहितं यदुत्पन्नं , तस्यैव प्रतीतिगोचरस्तत् – इति नियमात् , ज्ञानार्थयोर्युगपदध्यासस्वीकारात् । न च – देवदत्तीयपीतिम्नोऽन्यं प्रत्यतीन्द्रियत्वं परिकल्प्योक्तातिप्रसङ्गो निरसनीय – इति वाच्यम् । लाघवेन पुरुषमात्रं प्रत्यतीन्द्रियत्वकल्पनौचित्यात् । ईश्वरयोग्यतिरिक्तत्वं तु पुरुषे त्वयापि निवेशनीयम् – इति , न तन्निवेशप्रयुक्तं गौरवमुद्भावनीयम् । जपाकुसुमसान्निध्यस्थलेऽपि उत्पत्त्यनुत्पत्तिस्वीकारे वेदान्तिनां स्वगोत्रकलहोऽस्त्येव , पञ्चपादिकाकृदादिभिस्तत्रोत्पत्तिस्वीकारात् – इति । रजतत्वं पारमार्थिकत्वाभिमतरजतव्यक्तिभिन्नव्यक्तिवृत्ति , सकलरजतव्यक्तिवृत्तिजातित्वात् , सत्तावत् – इत्यनुमानेनापि प्रातीतिकं रजतं साधयामासुः ।

अत एव , ज्ञानमेवोत्पद्यतां , किं विषयोत्पत्त्या – इति नागेशादीनां मतं पराकृतम् । उक्तं हि रजतसंयोगत्वेन रजतप्रत्यक्षं प्रति कारणता व्यावहारिकस्थले क्लृप्ता – इति , कथं विषयं विना प्रत्यक्षं सम्भवेत् ।

विज्ञानवादप्रसङ्गश्च स्यात् ज्ञानस्यैव वहिर्भूतरजताकारतास्वीकारेण विषयापरोक्षतोपपादने । न च – ज्ञानातिरिक्तमसदेव – इति वक्तुमुत्सोढव्यम् । प्रत्यक्षादिविरोधात् । विस्तृतं चैतदस्माभिरन्यत्र – इति , नेह वितन्यते ।

एवम् – अलीकमेव रजतमिति , शुक्तिपरिणामस्तदिति च ब्रुवन्तो – अवहेलनीयाः । कथं हि नाम गगनकुसुमायमानं रजतमपरोक्षप्रतीतिगोचरतामासादयेत् । कथं च शुक्तेः क्षीरस्येव दधि परिणामो रजतं , समीपोपसर्पणसमनन्तरं 'नेदं रजतम्' – इति वाधविषयतामालम्वेत । नो खलु क्षीरस्य दध्यात्मना परिणत्यनन्तरं 'नेदं दधि' – इति प्रमिन्वन्ति लौकिकाः । तथा वुध्यमाना वा न भवन्ति भ्रान्ताः । तथा सति 'नेदं रजतम्' – इत्यादेरेव भ्रान्तित्वात् , अहो समर्थितो भ्रान्त्यभाववादः ।

दोषजनितं तद् दोषापगतावपगतम् – इति , 'नेदं रजतम्' – इत्यपि समीचीनमेव – इति चेत् । सत्यत्वे रजतस्य शुक्तिपरिणतेः दोषजन्यत्वस्यानुपपत्तेः , हट्टस्थरजतवदेव । नापि च निमित्तापाये नैमित्तिकापगमनं प्रतियन्ति प्रमातारः । कफापाये ज्वरापगतिः श्रुतिथिरभूत् – इति चेत् । तत्रापि धातुसाम्यमेव क्रियते कफापगत्या , पश्चाज्ज्वरेणापगम्यते – इति ।

स्वामी शङ्करचैतन्यभारती

एवं निम्बार्कादिभिः स्वीकृताः ख्यातयोऽप्युक्तास्वेवान्तर्भवन्ति , तस्मात् तासां खण्डनेनैव खण्डिता वोध्याः ।

तथा हि निम्वार्कमते जीवेश्वरजडानां परस्परं भेदाभेदौ स्वीक्रियेत(ते) – इति , शुक्तिरजतयोरपि तावेव । हट्टस्थरजतमेव च शुक्तितादात्म्येनैव भासते , न तु भेदाभेदाभ्याम् । तत्र चाभेदप्रतीतेः प्रमात्वेऽपि भेदाविषयकत्वेन भ्रमत्वम् , उभयवत्येकमात्रावगाहनात् – इति , अन्यथाख्यातिरेवेयं नव्यनैयायिकानुसारिणी । तादात्म्यस्य च सत्त्वेन संसर्गस्यासतोऽभानात् , न प्राचीननैयायिकानुवर्त्तिनी – इति ।



वल्लभमतख्यातिस्तु सत्ख्यात्यन्तर्गता । तन्मते –

सर्वं ब्रह्मपरिणामः । ब्रह्म च सच्चिदानन्दात्मकम् । जीवत्वं चावृतानन्दकत्वम् । जडत्वं चावृतचिदानन्दकत्वम् । अलीकस्तु न पदार्थः । परिणामश्च द्विविधः – दुग्धस्य दधीव कारणविकृतिहेतुरेकः ; कारणाविकृतिहेतुश्चापरः , यथा कल्पतरौ स्वसविधमुपगतकाम्यप्रदायिनि । न हि तत्र कल्पतरौ कश्चिद्विकारो जायते । तत्र भ्रमस्थले शुक्तिराद्यो ब्रह्मपरिणामः , रजतं तु द्वितीय – इति , ब्रह्मपरिणामत्वाद्रजतं सदेव – इति । तदेतत्तु सर्वथासङ्गतम् । नित्यस्त परिणामानुपपत्तेः । श्रुत्या च युक्तिविरुद्धार्थस्योपदेष्टुमशक्यत्वात् । न हि सहस्त्रमप्यागमा घटं पटयितुमीशते । मायामादायैव च ब्रह्मपरिणामप्रतिपादकत्वोपपत्तेः – इति ।

माध्वैस्तु – सदुपरागेणालीकस्य भानम् , अधिष्ठानातिरिक्तं च सर्वमलीकमेव – इति स्वीक्रियते । तदेतदखण्डि पूर्वम् – इति ।

अचिन्त्यभेदाभेदवादिनामप्येषैवास्मिन्विषये रीतिः – इति न पृथङ्निराकरणमपेक्षते ।

माध्वमतात्तेषां भिदा त्वियं प्रसङ्गाद्बोध्या । जीवब्रह्मणोर्भेदो माध्वमते । अत्र तु भेदाभेदौ । तत्राचिन्त्यत्वञ्च शब्दानुमितिप्रत्यक्षरूपप्रमाणत्रयाविषयत्वम् , अन्येषां प्रमाणानामेतेष्वेवान्तर्भावात् । ब्रह्मणश्च जातिगुणक्रियासम्वन्धात्मकप्रवृत्तिनिमित्तचतुष्टयशून्यत्वेन शब्दाविषयत्वात् , अलौकिकत्वेन प्रत्यक्षाविषयत्वात् , तादृशे व्याप्तिग्रहासम्भवेनानुमानाविषयत्वात् , भेदग्रहे चावश्यं प्रतियोग्यनुयोगिग्रहापेक्षणात् , अचिन्त्यप्रतियोग्यादिकत्वेन च भेदस्याचिन्त्यत्वात् । एतेन – अभेदस्याचिन्त्यत्वं – व्याख्यातम् । ब्रह्माग्रहणे तदभेदस्याशक्यग्रहत्वात् – इति ।

एतेन –

सोमाभावे च पूतीकग्रहणं श्रुतिचोदितम् ।
सोमावयवसद्भावात् – इति न्यायविदो विदुः ॥
व्रीह्यभावे च नीवारग्रहणं श्रुतिचोदितम् ।
तदेव सदृशं तस्य यत्तद्द्रव्यैकदेशभाक् ॥
शुक्त्यादौ रजतादेश्च भावः श्रुत्यैव वोधितः ।
रूप्यशुक्त्यादिनिर्देशभेदो भूयस्त्वहेतुकः ॥
रूप्यादिसदृशश्चायं शुक्त्यादिरुपलभ्यते ।
अतस्तस्यात्र सद्भावः प्रतीतेरपि निश्चितः ॥
कदाचिच्चक्षुरादेस्तु दोषाच्छुक्त्यंशवर्जितः ।
रजतांशो गृहीतोऽतो रजतार्थी प्रवर्त्तते ॥

दोषहानौ तु शुक्त्यंशे गृहीते तन्निवर्त्तते ।
अतो यथार्थं रूप्यादिविज्ञानं शुक्तिकादिषु ॥
वाध्यवाधकभावोऽपि भूयस्त्वेनोपपद्यते ।
शुक्तिभूयस्त्ववैकल्यसाकल्यग्रहरूपतः ॥
नातो मिथ्यार्थसत्यार्थविषयत्वनिवन्धना ।
एवं सर्वस्य सर्वत्वे व्यवहारव्यवस्थितिः ॥



स्वप्ने च प्राणिनां पुण्यपापानुगुणं भगवतैव तत्तत्पुरुषमात्रानुभाव्या तत्तत्कालावसानास्तथाभूताश्चार्थाः सृज्यन्ते – इति पराहतं वेदितव्यम् । भ्रमस्य सर्वानुभवसिद्धस्यानुपपत्तेर्वाधानुपपत्तेश्च । त्रिवृत्करणश्रुत्या सर्वस्य सर्वात्मकत्वे क्वायं भ्रमः । त्रिवृत्करणमस्माकमपि सम्मतं, श्रौतत्वात् । किन्तु, नैतावता घटे पटप्रतीतिरपि प्रमा स्यात् । व्यवहारमनुरुन्धानैर्हि घटे घटत्वप्रकारकप्रतीतेः प्रमात्वं स्वीकार्यं, व्यवहारेऽवाधात्; न तु पटत्वप्रतीतेरपि व्यवहारे वाध्यमानायाः ।

अपि च, सुरा यैः पदार्थैर्निर्मीयते तेषां कस्यचित् क्षीरादेश्च पानादपि प्रत्यवेयात्, तेषामपि सुरात्मकत्वेन । अथ तत्र भूयस्त्वं सुरावयवानां नास्ति, तर्हि स्वल्पस्तु प्रत्यवायः स्यादेव । अपि च, सुरा न पातव्या – इति श्रुतौ भूयस्याः सुरायाः पानेनैव प्रत्यवाय इति न श्रुतं, केवलसुराशब्द एव श्रुतः । तथा च स्वल्पसुरावयवकदुग्धादिपानात्प्रत्यवेयादेव । तस्मात्, सर्वथा पानभक्षणादिकं परित्यज्योपोष्यताम् इति, कष्टामाविष्टोऽसि दशाम् – इति ।

अथ तत्र सुरात्वं धर्मो नाङ्गीक्रियते । तर्हि क्वाङ्गीक्रियते । यत्र सुरात्वप्रकारकप्रतीतिः – इति चेत् । सा यदि कस्यचित्सुरानिधानसदृशनिधानस्थजलादौ समजनि, तस्य पानात्स तर्हि पापभाग्भवेदेव । सुरात्वप्रकारकप्रमात्वं प्रतीतौ विवक्षितम् – इति चेत् । तत्किं सर्वस्य ज्ञानस्य प्रमात्वं भणतस्तव मते जले तादृक्प्रतीतिर्न प्रमा । अस्ति सा प्रमा, किन्तु जलं सुरात्वेन वृद्धव्यवहारगोचरो नास्ति – इति चेत् । तर्हि, आयातोऽसि मार्गे । पारिभाषिकमिदं प्रमात्वम् । यद्धर्मप्रकारको व्यवहारो वृद्धपरम्परागतो यत्र तत्र तद्धर्मप्रकारकप्रतीतिः प्रमा, अन्यत्र तु भ्रम -- इति भ्रान्तिवादिनो ब्रुवते । तच्च त्वयापि वाचोभङ्ग्यन्तरेणाङ्गीकृतमेव । नो चेत्किमिति वृद्धव्यवहारं शरणीकरोषि । तत्, अलं प्रच्छादनैः । सोमाभावे पूतीकग्रहणं तु श्रुतिचोदितत्वात्, विधिवलादेवानुष्ठास्यते । नो चेत्, श्रुतेरपेक्षैव का । सादृश्यमात्राद्धवादृशैः स्वयमेव ग्रहीष्यते । त्रिवृत्करणश्रुतिविचारनिपुणैः ।

स्वल्पसादृश्यवन्मा ग्राहि, भूयस्सादृश्यवदेव च गृह्येत; अन्यथा, अदृष्टानुत्पत्तेः – इत्यर्थं श्रुतिः – इति चेत् । तर्हि यावददृष्टं सोमोपयोगाद्भवति, तावत्पूतीकोपयोगाद्भवति न वा । तावदेव भवति चेत् । सोमपूतीकयोस्सर्वात्मनैकत्वाभावात्, न भवत्येव किमिति न । सर्वात्मनैकत्वाभावेऽपि चोदनावलाद्भविष्यति – इति चेत् । तर्हि किमन्तर्गडुना सादृश्येन गवेष्यमाणेन । न्यूनमदृष्टं जायत – इति चेत् । तर्हि, अन्येन स्वल्पसदृशेनापि न्यूनं भविष्यत्येव । तदपेक्षया भूयस्सादृश्यवदुपयोगादधिकं भवति – इति चेत् । तर्हि, अधिकादृष्टलिप्सुना तदेवोपादास्यते, किं श्रुत्या । अपि च, अदृष्टार्थानां न प्रतिनिधिः – इति न्यायेन प्रतिनिधिपूतीकस्य दृष्टार्थत्वेऽपि, तस्यैव ग्रहणं नान्यस्य – इत्यत्र श्रुतिरेव नियामिका स्यात् । तस्मात्, सम्भवमात्रेण सादृश्यमुपष्टम्भमात्रमेव श्रुतेर्व्यधायि मीमांसकैः – इति नापेशलम् । तस्मात्, स्वप्नेऽप्याध्यासिक्येव सृष्टिः । अधिष्ठानं चात्मैव । जाग्रतीव च तत्रापि धर्मत्वेनैवाध्यासात्, न अहं सुखम् – इति प्रतीतेरापत्तिः । भगवतस्तु व्यावहारिकप्रपञ्चस्य व्यवहारे वाधाभावदर्शनात्, न व्यवहारे वाध्या सृष्टिस्तदीया – इति । तदेवं ब्रह्मैव

सर्वत्राविद्ययाधिष्ठानम् । अविद्यायास्तत्र स्वप्रकाशत्वेऽपि पूर्वोक्तार्थापत्त्यादिभिः साधितत्वादेव सामान्यविशेषभावस्य कल्पितस्य सम्भवात्, सामान्यतो ज्ञातत्वे सति विशेषतोऽज्ञातत्वमधिष्ठानत्वं सम्भवत्येव ।

अदृश्या(श्यो) दृश्यते राहुर्गृहीतेनेन्दुना यथा ।

तथानुभवमात्रात्मा दृश्येनात्मावलोक्यते ॥

इति रीत्या , कालादिप्रत्यक्षवच्च , ब्रह्मणः प्रत्यक्षभ्रमेऽधिष्ठानत्वोपयुक्तं प्रत्यक्षं सम्भवति । अपरापि सरणिरभ्यधायि आचार्यैः – "अध्यस्तद्रव्यत्ववति गुणादौ रूपानपेक्षचाक्षुषत्वदर्शनेन धर्म्यन्यूनसत्ताकद्रव्यत्ववत्प्रत्यक्षे एव चक्षू रूपमपेक्षते ; ब्रह्मणि च द्रव्यत्वं स्वापेक्षया न्यूनसत्ताकमेव" – इति , तस्य चाक्षुषत्वाद्युपपत्त्याधिष्ठानत्वोपपत्तिः – इति ।

सति चैवं , 'नासीदस्ति भाविनी वा रजतव्यक्तिः' , 'मिथ्यैव मम रजतमाभात्' – इत्याद्यनुभवसिद्धं स्वाधिष्ठाने त्रैकालिकनिषेधप्रतियोगित्वरूपं मिथ्यात्वं सदसद्विलक्षणत्वादिरूपं वा रजतादिगतं वियदादिप्रपञ्चेऽपि पूर्वोक्तरीत्या श्रुत्या सिद्धमपि श्रुत्यर्थे विप्रतिपन्नाय सद्धेतुलक्षणोपपन्नैर्दृश्यत्वादिभिः स्वव्यवहारे नियमतः स्वातिरिक्तसंविदपेक्षत्ववृत्तिविषयत्वाद्यात्मकैः व्याप्त्युपसंहारस्थलरजतादिकैः साध्यते , तादृशमिथ्यात्वं विना दृश्यत्वादीनामनुपपत्तेः । आध्यासिकसम्बन्धं विना दृग्दृश्यसम्बन्धानुपपत्तेः । सति चाध्यासिकसम्बन्धेऽधिष्ठानाध्यस्तयोरेव तस्य सम्भवात् , दृग्दृश्ययोरेकतरस्याधिष्ठानत्वमपरस्य चाध्यस्तत्वं वाच्यम् । तत्रानुस्यूतत्वात् , साक्षित्वाच्च , दृश एवाधिष्ठानत्वम् , अन्यत्त्वध्यस्तमेव – इति निश्चिक्ये समधिगताधिगन्तव्याधिगमैर्मुनीन्द्रैः । यदाहुः –

यतो ब्रह्मणि वेद्यत्वं गीर्वाणैरपि दुर्भणम् ।

श्रुतिबाधभयात्तस्मान्मिथ्या दृश्यं नियागतः (नियोगतः?) ॥

अविद्यायोनयो भावाः सर्वे भो बुद्बुदा इव ।

क्षणमुद्भूय गच्छन्ति ज्ञानैकजलधौ लयम् ॥

घटादिकं सद्रूपे कल्पितं , तदनुविद्धत्वेन प्रतीयमानत्वात् , सामान्यव्याप्त्या चन्द्रानुविद्धजलतरङ्गवत् – इति ।

ननु ब्रह्मणि वेद्यत्वादिकमस्ति , नवा । न चेत् , सर्वाधिष्ठानता कथम् । अस्ति चेत् , तस्यापि मिथ्यात्वात् शून्यवादप्रसङ्गः । - इति चेत् । अस्ति – इत्येवोत्तरं , परन्त्वाध्यासिकसम्बन्धेन , न तु स्वरूपसम्बन्धेन । स्वरूपसम्बन्धेन वर्त्तमानं सदेव स्वाश्रयमिथ्यात्वप्रयोजकं , यथा साध्याभाववदवृत्तित्वरूपा व्याप्तिः कालिकेन जले वर्त्तमानाऽपि तस्य व्याप्यत्वं नावहति , धूमे स्वरूपसम्बन्धेन तिष्ठन्ती तं व्याप्यीकरोत्येव – इति न दोषः ।

तदेवं ब्रह्मैव परमार्थसत् – इति स्थितम् । तच्च चिदानन्दात्मकमेव , न तु तयोराधारः । तथा सति तौ नित्यौ वानित्यौ वा स्याताम् । नाद्यः , नित्यस्य निराधारत्वेन साधारत्वानुपपत्तेः । न खलु क्वापि दृष्टं 'नित्यश्च क्वचिद्वर्त्तते च' – इति । गुणस्य नित्यस्यापि परमाण्वादिषु वृत्तेः । - इति चेत् । अस्य स्वशिष्यान्प्रत्येव वाच्यत्वात् । गुणश्च नित्यश्च – इत्येव व्याहतम् । विमता गुणा अनित्याः , गुणत्वात् , घटरूपादिवत् – इत्यनुमानोपपत्तेश्च । परमाणवश्चानित्या , गुणाश्रयत्वात् , घटादिवत् । न च – तेषामनित्यत्वे कारणधाराविश्रान्तिः – इति वाच्यम् । ब्रह्मणि सर्वास्यापि विश्रान्तेः । न च – मेरुसर्षपयोरैक्यप्रसङ्गे(ङ्गो)ऽपि , मायिकत्वेऽपि

न्यूनाधिकावयवकत्वोपपत्तेः । ब्रह्मणश्चानित्यगुणाश्रयत्वेऽनित्यत्वप्रसक्तौ शून्यवादप्रसङ्गात् , न द्वितीयोऽपि । श्रुतिश्च परमाणुगगनादिप्रतियोगिकाभावमाह प्रलये – 'नासीद्रजो न व्योम परो यत्' – इति ऋग्वेदीया ।

तस्मात् , सच्चिदानन्दात्मकब्रह्मातिरिक्तं मिथ्याभूतं जिहासास्पदमेव – इति , तत उपरन्तव्यं नित्यपरिपूर्णानन्दरिरंसुभिः – इति । यदाह श्रुतिः –



एकमेवाद्वितीयं ब्रह्म नेह नानास्ति किञ्चन ।

मृत्योस्स मृत्युमाप्नोति य इह नानेव पश्यति ।

- इति ।

वासुदेवस्सर्वमिति स महात्मा सुदुर्लभः ॥

- इति स्मृतिश्च ।

परीक्ष्य लोकान्कर्मचितान्ब्राह्मणो निर्वेदमायात् , नास्त्यकृतः कृतेन

– इति च ।

तदिदमद्वैतराजवर्त्म चिदानन्दामृतांशूद्रा(द्रू)स्यमानं मनागपि न दोषकण्टकैः संस्पृष्टं शान्ततरैरवधीरितभवजन्मसुखैरहिंसादियमानुष्ठानबद्धपरिकरैर्निषेव्यमाणं रागद्वेषाविद्यादिसकलोपप्लवलोपहेतुः परमपुरुषार्थफलं साधनान्तमनपेक्ष्यैव च लोकोत्तरानन्दानुभूतिरूपदृष्टफलसाधनञ्च – इति यदगादि श्रुत्या –

सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत ।

तज्जलान् – इति । ब्रह्मोत्पत्तिप्रलयस्थितिकम् – इत्यर्थः ।

ततश्च , यतितव्यं तदाप्तये – इति । तद्भू(दमू/दभू)रानन्दभराः सततं निपीय प्रमोदिषीमहि परस्मिश्चिदेकरसे वयममी – इत्याशास्महे भगवतोऽधोक्षजात् –

चेतोनुरज्यतु कदापि न नश्वरेषु
भोग्येषु सारविधुरेषु विकल्पितेषु ।
शान्तिः परापि लसतात्सुमनोमनस्सु
या दुर्लभा सुमनसां सुमनोऽधिगम्य ॥

प्राच्यैर्नव्यैर्निबन्धैरुपनिषदनुगैस्तर्कविन्निर्मितैश्च
सारादानादृतैस्तैः समचकलमहं भ्रान्तितत्त्वं विकीर्णम् ॥
ख्यातौ वादे ह्यमुष्मिन्नतिसरलतनौ शम्बरारात्यरातेः
स्थाने पुण्येतिरम्ये विमलघनरुचेस्तोषहेतोस्सुतोषे ॥

स्वामी शङ्करचैतन्यभारती

